माणिकचन्द्र-दिगम्बरजैनग्रन्थमाला, नौवाँ पुष्प ।

श्रीमच्चामुण्डरायविरचितः

# चारित्रसारः ।



जयपुरनगरनिवासिपण्डितइन्द्रलालसाहित्यशास्त्रिणा
पण्डितउदयलालकाशलीवालेन च
संशोधित ।



प्रकाशिका—
माणिकचन्द-दि० जैनग्रन्थमाला-समितिः ।



भाद्र वीर नि० २४४३ ।



विक्रमाब्द १९७४ ।

माणिकचन्द्र-ग्रन्थमाला।

# पूर्वप्रकाशित ग्रन्थ।



१ लघीयस्त्रयादिसंग्रह । इसमें भट्टाकलंकदेवकृत लघीयस्त्रय सटीक, आचार्य अनन्तकीर्तिकृत लघु सर्वज्ञसिद्धि और बृहत्सर्वज्ञसिद्धि तथा अकलंकदेवकृत स्वरूपसम्बोधन, इन चार ग्रन्थोंका संग्रह छपा है। मूल्य ।=)

२ सागारधर्मामृत सटीक। पं० आशाधरकृत मूल और स्वोपज्ञ टीका सहित। मूल्य ।≈)

३ विक्रान्तकौरवीय नाटक। कवि श्रीहस्तिमल्लकृत। मू० ।=)

४ पार्श्वनाथचरित । महाकवि वादिराजसूरिकृत सुन्दर काव्य। मूल्य ॥)

५ मैथिलीकल्याण नाटक। कवि श्री हस्तिमल्लकृत। मू० ।)

६ आराधनासार सटीक । मूल गाथा श्रीदेवसेनाचार्यकृत और संस्कृत टीका श्रीरत्नकीर्तिदेवकृत। मूल्य ।)॥

७ जिनदत्तचरित्र। आचार्य गुणभद्रकृत। मूल्य ।)॥

८ प्रद्युम्नचरित्र। आचार्य महासेनकृत काव्य। मू० ॥)

मिलनेका पता—

**श्रीजैनग्रन्थरत्नाकर कार्यालय,**

हीराबाग, पो० गिरगांव-बंबई।




नमो निर्ग्रंथगुरुभ्य ।

श्रीमच्चामुंडरायप्रणीत· ।

# चारित्रसारः ।



## मगलाचरणम् ।

अरिहननरजोहननरहस्यहर पूजनार्हमर्हन्तम् ।
सिद्धान्सिद्धाष्टगुणान् रत्नत्रयसाधकान् स्तुवे साधून् ॥
श्रीमज्जिनेन्द्ररचिताय सुमगलाय लोकोत्तमाय शरणाय विनेयजंतो
धर्माय कायवचनाशयशुद्धितोऽहं स्वर्गापवर्गफलदाय नमस्करोमि ॥

धर्म सर्वसुखाकरो हितकरो धर्म बुधाश्चिन्वते ।
धर्मेणैव समाप्यते शिवसुख धर्माय तस्मै नम ॥
धर्मान्नास्त्यपर सुहृद्भवभृता धर्मस्य मूल दया ।
धर्मे चित्तमह दधे प्रतिदिन हे धर्म ! मा पालय ॥

---

१ मोहनीयज्ञानदर्शनावरणान्तरायनश्वरम्। २ ' शरणं गृहरक्षित्रो ' इत्यमर
३ अत्राखिलश्चारत्वसमावेश ।

## सम्यक्त्व-पञ्चाणुव्रतवर्णनम् ।

सम्यग्दृष्टीनां चत्वारो वन्द्याः प्रधानभूताः, अर्हन्तः सिद्धाः साधवो धर्मश्चेति । तत्राहत्सिद्धसाधवो नमस्कारेणोक्ताः । धर्म उच्यते । आत्मानमिष्टनरेन्द्रसुरेन्द्रमुनीन्द्रमुक्तिस्थाने धत्त इति धर्मः । अथवा संसारस्थान्प्राणिनो धरते धारयतीति वा धर्मः । स च सागाराऽनगारविषयभेदाद्द्विविधः । तत्र सागारधर्म उच्यते ।

दार्शनिकव्रतिकावपि सामायिकप्रोषधोपवासश्च ।
सचित्तरात्रिभुक्तिव्रतनिरतौ ब्रह्मचारी च ॥
आरम्भाद्विनिवृत्तः परिग्रहादनुमतस्तथोद्दिष्टः ।
इत्येकादशनिलया जिनोदिताः श्रावकाः क्रमशः ॥

व्रतादयो गुणा दर्शनादिभिः पूर्वगुणैः सह क्रमप्रवृद्धा भवन्ति । तत्र दार्शनिकः संसारशरीरभोगनिर्विण्णः पञ्चगुरुचरणभक्तः सम्यग्दर्शनविशुद्धश्च भवति । जिनेन भगवताऽर्हता परमेष्ठिनोपदिष्टे निर्ग्रन्थलक्षणे मोक्षमार्गे श्रद्धानं सम्यग्दर्शनम् । तस्य सम्यग्दर्शनस्य मोक्षपुरपथिकपाथेयस्य मुक्तिसुन्दरीविलासमणिदर्पणस्य संसारसमुद्रगर्तावर्तमग्नजनदत्तहस्तावलम्बनस्यैकादशोपासकस्थानप्रासादाधिष्ठानस्योत्तमक्षमादिदशकुलधर्मकल्पपादपमूलस्य परमपावनस्य सकलमङ्गलनिलयस्य मोक्षसुखैककारणस्याष्टाङ्गानि भवन्ति । निःशङ्कितत्वं निःकाङ्क्षता निर्विचिकित्सता अमूढदृष्टित्वं उपबृंहणं स्थितिकरणं वात्सल्यं प्रभावना चेति । तत्रेहलोकः परलोकः व्याधिर्मरणं अगुप्तिः अत्राणं आकस्मिकं इति सप्तभयाद्ध्यायाद्विनिर्मुक्तता, अथवाऽर्हदुपदिष्टद्वादशाङ्गप्रवचनगहने एकमक्षरं पदं वा किमिदं स्याद्वा

न वेति शङ्कानिरासो निःशङ्कितत्वम् । ऐहलौकिकपारलौकिकेन्द्रिय विषय उपभोगाकाङ्क्षानिवृत्तिः, कुदृष्ट्यन्तराकाङ्क्षानिरासो वा निःकाङ्क्षता । शरीराद्यशुचित्वभावमवगम्य शुचीति मिथ्यासङ्कल्पापनयोऽथवाऽर्हत्प्रवचने इदमयुक्तं घोरं कष्टं न चेदिदं सर्वमुपपन्नमित्यशुभभावनानिरासो विचिकित्सानिरहः । बहुविधेषु दुर्नयवर्त्मसु तत्त्ववदाभासमानेषु युक्त्यभावमध्यवस्य परीक्षाचक्षुषा विरहितमोहममूढदृष्टित्वम् । उत्तमक्षमादिभावनयाऽऽत्मनः आत्मीयस्य च धर्मपरिवृद्धिकरणमुपबृंहणम् । कषायोदयादिषु धर्मपरिभ्रंशकारणेषूपस्थितेषु स्वपरयोर्धर्मप्रच्यवनपरिपालनं स्थितिकरणम् । जिनप्रणीते धर्मामृते नित्यानुरागताऽथवा सद्यःप्रसूता यथा गौर्वत्से स्निह्यति तथा चातुर्वर्ण्ये सङ्घेऽकृत्रिमस्नेहकरणं वात्सल्यम् । सम्यग्दर्शनज्ञानचारित्ररत्नत्रयप्रभावादात्मनः प्रकाशनमथवा ज्ञानतपःपूजासु ज्ञानदिनकरकिरणैः परसमयखद्योतोद्योतावरणकरणं च, महोपवासादिलक्षणेन देवेन्द्रविष्टरप्रकम्पनसमर्थेन सत्तपसा स्वसमयप्रकटनं च महापूजामहादानादिभिर्धर्मप्रकाशनं च प्रभावना । एवंविधाष्टाङ्गविशिष्टं सम्यक्त्वं तद्विकलयोरणुव्रतमहाव्रतयोर्नामापि न स्यात् । सम्यग्दर्शनमणुव्रतयुक्तं स्वर्गाय, महाव्रतयुक्तं मोक्षाय च ।

> सम्यक्त्वमङ्गहीनं राज्यमिव श्रेयसे भवेन्नैव । ५
> न्यूनाक्षरो हि मन्त्रो नालं विषवेदनाच्छित्त्यै ॥

सम्यक्त्वस्य गुणाः ।

> संवेगो निर्वेदो निन्दा गर्हा तथोपशमभक्ती ।
> अनुकम्पा वात्सल्यं गुणास्तु सम्यक्त्वयुक्तस्य ॥

उक्तं चाबद्धायुष्कविषये—

सम्यग्दर्शनशुद्धा नारकतिर्यङ्नपुंसकस्त्रीत्वानि ।
दुष्कुलविकृताल्पायुर्दरिद्रतां च व्रजन्ति नाप्यव्रतिकाः ॥

भवाब्धौ भव्यसार्थस्य निर्वाणद्वीपयायिनः ।
चारित्रयानपात्रस्य कर्णधारो हि दर्शनम् ॥

दार्शनिकस्य कस्यचित्कदाचिद्दर्शनमोहोदयादतीचाराः पञ्च भवन्ति । शङ्काकाङ्क्षाविचिकित्सान्यदृष्टिप्रशंसासंस्तवा इति ।

तत्र मनसा मिथ्यादृष्टेर्ज्ञानचारित्रगुणोद्भावनं प्रशंसा, वचसा भूताभूतगुणोद्भावनं संस्तवः, एवं प्रशंसासंस्तवयोर्मानसवृत्तौ वाक्कृतश्च भेदः, शेषाः सुगमाः । सम्यग्दर्शनसामान्यादणुव्रतिमहाव्रतिनोरिमेऽतीचाराः ।

व्रतिको निःशल्यः पञ्चाणुव्रतरात्रिभोजनविरमणशीलसप्तकं निरतिचारेण यः पालयति स भवति । तत्र यथा शरीरानुप्रवेशिनः काण्डकुन्तादिप्रहरणं शरीरिणां बाधाकरं तथा कर्मोदयविकारे शारीरमानसबाधाहेतुत्वाच्छल्यमिव शल्यम् । तत्त्रिविधं, मायानिदानमिथ्यादर्शनभेदात् । माया वञ्चनं, निदानं विषयभोगाकाङ्क्षा, मिथ्यादर्शनमतत्त्वश्रद्धानम् । उत्तरत्र वक्ष्यमाणेन महाव्रतिनाऽपि शल्यत्रयं परिहर्तव्यम् ।

अभिसन्धिकृतो नियमो व्रतमित्युच्यते, सर्वसावद्यनिवृत्त्यसंभवादणुव्रतं द्वीन्द्रियादीनां जङ्गमप्राणिनां प्रमत्तयोगेन प्राणव्यपरोपणान्मनोवाक्कायैश्च निवृत्तः । अगारीत्याद्यणुव्रतम् ।

तस्य प्रमत्तयोगात्प्राणव्यपरोपणलक्षणस्य पञ्चातीचारा भवति । बधो, वध, छेद, अतिभारारोपण, अन्नपाननिरोधश्चेति । तत्राभिमतदेशगमन प्रत्युत्सुकस्य तत्प्रतिबन्धहेतो कीलादिषु रज्ज्वादिभि र्व्यतिषगो बध । दडकशावेत्रादिभि प्राणिनामभिघातो वधः । कर्णनासिकादीनामवयवानामपनयन छेद । न्यायादनपेतान्द्वारादतिरिक्तस्य भारस्य वाहनमनिलोभाद्गवादीनामतिभारारोपणम् । तेषा गवादीना कुतश्चित्कारणात् क्षुत्पिपासाबाधोत्पादनमन्नपाननिरोध इति ।

स्नेहस्य मोहस्य द्वेषस्य वोद्रेकाद्यदसत्याभिधान ततो निवृत्तादरो गृहीति द्वितीयमणुव्रतम् ।

तस्य व्रतस्य पञ्चातिक्रमा भवति । मिथ्योपदेश, रहोऽभ्याख्यान, कूटलेखक्रिया, न्यासापहार, साकारमन्त्रभेदश्चेति ।

तत्राभ्युदयनि श्रेयसार्थेषु क्रियाविशेषेषु अन्यस्यान्यथा प्रवर्त्तनमभिसधान वा मिथ्योपदेश । स्त्रीपुरुषाभ्यामेकान्तेऽनुष्ठितस्य क्रियाविशेषस्य प्रकाशन रहोऽभ्याख्यानम् । अन्येनानुक्त यत्किंचित्परप्रयोगवशादेव तेनोक्तमनुष्ठितमिति वचनानिमित्त लेखन कूटलेख क्रिया । हिरण्यादेर्द्रव्यस्य निक्षेप्तुर्विस्मृतसख्यस्याल्पसख्यानमाद दानस्य 'एवमित्य—' नुज्ञावचन न्यासापहार । अर्थप्रकरणागविकारभ्रूक्षेपादिभि पराकूतमुपलभ्य यदाविष्करणमसूयादिनिमित्त तत्साकारमन्त्रभेद इति ।

अन्यपीडाकर पार्थिवादिभयवशादवश्यपरित्यक्त वा निहित पतित विस्मृत वा यददत्त ततो निवृत्तादर श्रावक इति तृतीय मणुव्रतम् ।

अदत्तादानविरते पञ्चातीचारा भवन्ति। स्तेनप्रयोग, तदाहृतादान, विरुद्धराज्यातिक्रम, हीनाधिकमानोन्मान, प्रतिरूपकव्यवहारश्चेति। मोषकस्य त्रिधा प्रयोजन, मुष्णन्तं स्वयमेव प्रयुङ्क्ते, अन्येन वा प्रयोजयति, प्रयुक्तमनुमन्यते वा यत स स्तेनप्रयोग। अप्रयुक्तेनाननुमतेन च चौरेणानीतस्य ग्रहण तदाहृतादानम्। विरुद्ध राज्य विरुद्धराज्य, उचितन्यायादन्येन प्रकारेणादान ग्रहणमतिक्रम, तस्मिन्विरुद्धराज्ये योऽसावतिक्रम स विरुद्धराज्यातिक्रम। प्रस्थादिमान तुलाद्युन्मानमेतेन न्यूनेनान्यस्मै देयमधिकेनात्मना ग्राह्यमित्येवमादि कूटप्रयोगो हीनाधिकमानोन्मानम्। कृत्रिमैर्हिरण्यादिभिर्वञ्चना, पूर्वको व्यवहार प्रतिरूपकव्यवहार इति।

उपात्ताया अनुपात्तायाश्च पराङ्गनाया सङ्गाद्विरतरतिर्विरताविरत इति चतुर्थमणुव्रतम्।

स्वदारसंतोषव्रतस्यातीचारा पञ्च भवन्ति। परविवाहकरण, इत्वरिका–अपरिगृहीतागमन, इत्वरिकापरिगृहीतागमन, अनङ्गक्रीडा, कामतीव्राभिनिवेशश्चेति। तत्र सद्वेद्यस्य चारित्रमोहस्य चोदयाद्विवहन विवाह परस्य विवाहकरण परविवाहकरण। ज्ञानावरणक्षयोपशमादापादितकलागुणज्ञतया चारित्रमोहस्त्रीवेदोदयप्रकर्षादङ्गोपाङ्गनामोदयावष्टम्भाच्च परपुरुषानेतीति इत्वरिका या गणिकात्वेन वा पुंश्चलित्वेन परपुरुषगमनशीला अस्वामिका सा अपरिगृहीता, तस्या गमनमित्वरिका-अपरिगृहीतागमनम्। या पुनरेकपुरुषभर्तृका सा परिगृहीता, तस्या गमनमित्वरिकापरिगृहीतागमनम्। अङ्ग प्रजनन

योनिश्च, ततो जननादन्यत्रानेकविधप्रजननविकारेण रतिरनङ्गक्रीडा । कामस्य प्रवृद्ध परिणामोऽनुपरतवृत्त्यादि कामतीव्राभिनिवेश इति ।

धनधान्यक्षेत्रादीनामिच्छावशात् कृतपरिच्छेदो गृहीति पञ्चममणुव्रतम् ।

परिग्रहविरमणव्रतस्य पञ्चातिक्रमा भवति । क्षेत्र-वास्तु-हिरण्य-सुवर्ण-धन धान्य-दासी दास-कुप्यमिति । तत्र क्षेत्र सस्याधिकरण, वास्तु अगार, हिरण्य रूप्यादिव्यवहारप्रयोजन, सुवर्ण विख्यात, धन गवादि, धान्य व्रीह्यादि, दासीदास भृत्यस्त्रीपुरुषवर्ग, कुप्य क्षौमकार्पासकौशेयचन्दनादि, एतेषु एतावानेव परिग्रहो मम नाऽन्योऽन्य इति परिच्छिन्नात्प्रमाणात् क्षेत्रवास्त्वादिविषयादतिरेक अतिलोभवशात्प्रमाणातिरेक इति ।

रात्रावन्नपानखाद्यलेह्येभ्यश्चतुर्भ्य सत्त्वानुकम्पया निवर्मण रात्रिभोजनविरमण षष्ठमणुव्रतम् ।

वधादसत्याच्चौर्याच्च कामाद्ग्रन्थान्निवर्त्तनम् ।
पञ्चधाऽणुव्रत राज्यभुक्ति षष्ठमणुव्रतम् ॥

इत्यणुव्रतवर्णनम् ।

## शीलसप्तकवर्णनम् ।

व्यवायमी विरतिमभ्युपगतस्य श्रावकस्य व्रतविशेषो गुणव्रतत्रय शिक्षाव्रतचतुष्टय शीलसप्तकमित्युच्यते । दिग्विरति, देशविरति, अनर्थदण्डविरति, सामायिक, प्रोषधोपवास, उपभोगपरिभोगपरिमाण, अतिथिसंविभागश्चेति ।

तत्र प्राची, अपाची, उदीची, प्रतीची, ऊर्द्ध्व, अधो, विदिशश्चेति । तासा परिमाण योजनादिभि पर्वतादिप्रसिद्धाभिज्ञानैश्च तास्वेव दिशो दुष्परिहारे क्षुद्रजन्तुभिराकुले अतस्ततो बहिर्न यास्यामीति निवृत्तिर्दिग्विरति । निरवशेषतो निवृत्तिं कर्तुमशक्नुवत शक्त्या प्राणिवधविरतिं प्रत्यागूर्णस्यात्र प्राणनिमित्त यात्रा भवतु मा वा सत्यपि प्रयोजनभूयस्त्वे परिमिताद्दिगवधेर्बहिर्न यास्यामीति प्रणिधानाद्हिंसाद्यणुव्रतधारिणोऽप्यस्य परिगणिताद्दिगवधेर्बहिर्मनोवाक्काययोगैः कृतकारितानुमतविकल्पैर्हिंसादिसर्वनिवृत्तिरिति महाव्रत भवति ।

दिग्विरमणव्रतस्य पञ्चातीचारा भवन्ति । ऊर्द्ध्वातिक्रम, अधोऽतिक्रम, तिर्यगतिक्रम, क्षेत्रवृद्धि, स्मृत्यन्तराधान चेति । तत्र पर्वतमरुद्भूम्यादीनामारोहणादूर्द्ध्वातिक्रम । कूपावतरणादिरधोऽतिक्रम । भूमिबिलगिरिदरीप्रवेशादिस्तिर्यगतिक्रम । प्राग्दिशो योजनादिभि परिच्छिद्य पुनर्लोभवशात्ततोऽधिकाकांक्षण क्षेत्रवृद्धि । इदमित्थं मया योजनादिभिरभिज्ञान कृतमिति तस्मात् स्मृत्यन्तराधानम् । दिग्विरमणव्रतस्य प्रमादान्मोहाद् व्यासङ्गाद्वातीचारा भवन्ति ।

मर्यादस्य गृहान्तरस्य तडागस्य वा मध्यं मुक्त्वा देशान्तरं न गमिष्यामीति तन्निवृत्तिर्देशविरतिः । प्रयोजनमपि दिग्विरतिवद्देशविरतिव्रतस्य ।

तस्य पञ्चातीचारा भवन्ति । आनयन, प्रेष्यप्रयोग, शब्दानुपात, रूपानुपात, पुद्गलक्षेप इति । तत्रात्मना सङ्कल्पितदेशे स्थितस्य प्रयोजनवशाद्यत्किञ्चिदानयेत्याज्ञापनमानयनम् । परिच्छिन्नदेशाद्बहिः स्वयमगत्वाऽन्यप्रेष्यप्रयोगेणैवाभिप्रेतव्यापारसाधनं प्रेष्यप्रयोगः । व्यापारकरान्पुरुषानुद्दिश्याभ्युत्कासिकादिकरणं शब्दानुपातः । मम रूपं निरीक्ष्य व्यापारमचिरान्निष्पादयन्तीति स्वाङ्गदर्शनं रूपानुपातः । कर्मकरानुद्दिश्य लोष्टपाषाणादिनिपातः पुद्गलक्षेप इति । दिग्विरतिः सार्वकालिकी । देशविरतिर्यथाशक्ति कालनियमेनेति ।

प्रयोजनं विना पापादानहेतुरनर्थदण्डः । स च पञ्चविधः । अपध्यान, पापोपदेश, प्रमादाचरित, हिंसाप्रदान, अशुभश्रुतिरिति । तत्र जयपराजयवधबन्धाङ्गच्छेदसर्वस्वहरणादिकं कथं स्यादिति मनसा चिन्तनमपध्यानम् । पापोपदेशश्चतुर्विधः । क्लेशवाणिज्या, तिर्यग्वणिज्या, वधकोपदेशः, आरम्भकोपदेशश्चेति । तत्रास्मिन्प्रदेशे दासीदासाः सुलभास्तानमुं देशं नीत्वा विक्रये कृते महानर्थलाभो भविष्यतीति क्लेशवाणिज्या । गोमहिष्यादीन्पशूनत्र गृहीत्वाऽन्यत्र देशे व्यवहारे कृते सति भूरि वित्तलाभ इति तिर्यग्वणिज्या । वागुरिकसौकरिकशाकुनिकादिभ्यो मृगवराहशकुन्तप्रभृतयोऽमुष्मिन्देशे सन्तीति वचनं वधकोपदेशः । आरम्भकेभ्यः कृषीवलादिभ्यः क्षित्युदकज्वलनपवन

प्रकारं पापसंयुक्तं वचनं पापोपदेशः । प्रयोजनमन्तरेण भूमिकुट्टनसलिलसेचनाग्निविध्यापनवातप्रतिघातनवनस्पतिच्छेदनाद्यवद्यकर्म प्रमादाचरितं विषशस्त्राग्निरज्जुकशादण्डादिहिंसोपकरणप्रदानं हिंसाप्रदानम् । रागादिप्रवृद्धितो दुष्टकथाश्रवणश्रावणशिक्षणव्यापृतिरशुभश्रुतिरिति । एतस्मादनर्थदण्डाद्विरतिः कार्या ।

अनर्थदण्डविरमणस्य पञ्चातीचारा भवन्ति । कन्दर्पः, कौत्कुच्यं, मौखर्यं, असमीक्ष्याधिकरणं, उपभोगपरिभोगानर्थक्यमिति । चारित्रमोहोदयापादितात्रागोद्रेकात्प्रहासमिश्रोऽशिष्टवाक्प्रयोगः कन्दर्पः । रागस्य समावेशाद्धास्यवचनमशिष्टवचनमित्येतदुभयं परस्मिन् दुष्टेन कायकर्मणा युक्तं कौत्कुच्यम् । अशालीनतया यत्किंचनानर्थकं बहुप्रलपनं तन्मौखर्यम् । असमीक्ष्याधिकरणं त्रिविधम् । मनोवाक्कायविषयभेदात् । तत्र मानसं परानर्थककाव्यादिचिंतनम् । वाग्गतं निष्प्रयोजनकथाख्यानं परपीडाप्रधानं यत्किंचन वक्तृत्वं च । कायिकं प्रयोजनमन्तरेण गच्छंस्तिष्ठन्नासीनो वा सचित्ताचित्तपत्रपुष्पफलछेदनभेदनकुट्टनक्षेपणादीनि कुर्यात्, अग्निविषक्षारादिप्रदानं चारभेत । इत्येवमादि तदेतत्सर्वमसमीक्ष्याधिकरणम् । यस्य यावतार्थेनोपभोगपरिभोगौ परिकल्पितौ तस्य तावानेवार्थ इत्युच्यते, ततोऽन्यस्याधिक्यमानर्थक्यं तदुपभोगपरिभोगानर्थक्यम् ।

सम्यगेकत्वेनायनं गमनं समयः, स्वविषयेभ्यो विनिवृत्य कायवाङ्मनःकर्मणामात्मना सह वर्तनाद्द्रव्यार्थेनात्मन एकत्वगमनमित्यर्थः । समय एव सामायिकं, समयः प्रयोजनमस्येति वा सामायिकम् ।

तच्च नियतकाले नियतदेशे च भवति । निर्यालेपमेकान्त भवनं वन चैत्यालयादिकं च देशं मर्यादीकृत्य वेशबन्ध मुष्टिबन्ध वस्त्रबन्ध पर्यंकमकरमुखाद्यासन स्थानं च । कालमवधिं कृत्वा शीतोष्णादि परीषहविजयी, उपसर्ग सहिष्णुर्मौनी हिंसादिभ्यो विषयस्पार्थेभ्यश्च विनिवृत्त्य सामायिके वर्त्तमानो महाव्रती भवति । हिंसादिषु सर्वेष्वनासक्तचित्तोऽभ्यतरप्रत्याख्यानमयमघातिकर्मोदयजनितमदाविरतिपरिणामे सत्यपि महाव्रतमित्युपचर्यते । एवं च कृत्वाऽभव्यस्यापि निर्ग्रंथलिंगधारिण एकादशांगाध्यायिनो महाव्रतपरिपालनादसंयमभावस्याप्युपरिमग्रैवेयकविमानवासितोपपन्ना भवति । एवं भव्योऽपि निर्ग्रंथरूपधारी सामायिकबलादहमिंद्रस्थानवासी भवति चेत्किं पुनः सम्यग्दर्शनपूतात्मा सामायिकमापन्न इति ।

समायिकव्रतस्य सर्वसावद्ययोगप्रत्याख्यानस्य पंचातीचारा भवंति । कायदुःप्रणिधान, वाग्दुःप्रणिधान, मनोदुःप्रणिधान, अनादर, स्मृत्यनुपस्थापन चेति । तत्र दुष्टं प्रणिधानं, दुःप्रणिधानं, अन्यथा वा प्रणिधानं दुःप्रणिधानम्, क्रोधादिपरिणामवशाद्दुष्टं प्रणिधानम् भवति, शरीरावयवानामनिभृतावस्थान कायदुःप्रणिधानम् । वर्णसंस्कारे भावार्थे चागमकत्व चापलादि वाग्दुःप्रणिधानम् । मनसोऽनर्पितत्व मनोदुःप्रणिधानम् । इति कर्त्तव्यता प्रत्यसात्स्याद्यथा कथंचित्प्रवृत्तिरनुत्साहोऽनादर । अनैकाग्र्यमसमाहितमनस्कता स्मृत्यनुपस्थान, अथवा रात्रिंदिव प्रमादिनस्य सचिंत्यानुपस्थान स्मृत्यनुपस्थानम् । मनोदुःप्रणिधानस्मृत्यनुपस्थान योरस भेद , क्रोधाद्यावेशात्सामायिकौदासीन्येन वा चिरकालमव-

स्थापन मनसो मनोदुःप्रणिधान, चिंतायाः परिस्पन्दनादैकाग्र्येणानव स्थापन स्मृत्यनुपस्थापनमिति विस्पष्टमन्यत्वम् ।

प्रोषध पर्वपर्यायवाची, शब्दादिग्रहण प्रति निवृत्तौत्सुक्यानि पचापीन्द्रियाणि उपेत्य तस्मिन्वसतीत्युपवास । उक्त च-

उपेत्याक्षाणि सर्वाणि निवृत्तानि स्वकार्यत ।
वसंति यत्र स प्राज्ञैरुपवासोऽभिधीयते ॥

पर्वणि चतुर्विधाऽऽहारनिवृत्ति प्रोषधोपवास, निरारम्भ श्रावक स्वशरीरसंस्कारकारणस्नानगंधमाल्याभरणादिभिर्विरहित शुचाव-वकाशे साधुनिवासे चैत्यालये स्वप्रोषधोपवासगृहे वा धर्मकथा-श्रवणश्रावणचिन्तनावहितांत करण सन्नुपवसेत् ।

प्रोषधोपवासस्य पचातीचारा भवति । अप्रत्यवेक्षिताप्रमार्जितो त्सर्ग, अप्रत्यवेक्षिताप्रमार्जितादान, अप्रत्यवेक्षिताप्रमार्जितसंस्तरो पक्रमण, अनादर, स्मृत्यनुपस्थान चेति । तत्र जन्तव सति न सति वेति प्रत्यवेक्षण चक्षुषोर्व्यापारो मृदूपकरणेन यत्क्रियते प्रयोजन तत्प्रमार्जन अप्रत्यवेक्षिताया भुवि मूत्रपुरीषोत्सर्गोऽप्रत्यवे क्षिताप्रमार्जितोत्सर्ग । अप्रत्यवेक्षिताप्रमार्जितस्यार्हदाचार्यपूजो पकरणस्य गंधमाल्यधूपादेरात्मपरिधानाद्यर्थस्य वस्त्रपात्रादेश्चादानम प्रत्यवेक्षिताप्रमार्जितादानम् । अप्रत्यवेक्षिताप्रमार्जितस्य प्रावरणादे संस्तरस्योपक्रमणप्रत्यवेक्षिताप्रमार्जितसंस्तरोपक्रमणम् । क्षुत्पीडि तत्वादावश्यकेष्वनुत्साहोऽनादर । स्मृत्यनुपस्थान व्याख्यातमेव ।

उपेत्यात्मसात्कृत्य भुज्यत इत्युपभोग, अशनपानगंधमाल्यादि सकृद् भुक्त्वा पुनरपि भुज्यत इति परिभोग, आच्छादनप्रावरणाल-

वाऽशयनाशनगृहयानवाहनादि तयो परिमाणमुपभोगपरिभोगपरिमाणम्। भोगपरिसंख्यानं पञ्चविधं,त्रसघातप्रमादबहुवधानिष्टानुपसेव्यविषयभेदात्। तत्र मधुमांसं सदा परिहर्त्तव्यं त्रसघातं प्रति निवृत्तचेतसा मद्यमुपसेव्यमानं कार्याकार्यविवेकसंमोहकरमिति तद्वर्जनं। प्रमादविरहाय कैतक्यर्जुनपुष्पादीनि बहुजन्तुयोनिस्थानानि, आर्द्रशृङ्गबेरमूलकहरिद्रानिम्बकुसुमादीन्यनन्तकायव्यपदेशार्हाणि, एतेषामुपसेवनेन बहुघातोऽल्पफलमिति तत्परिहारः श्रेयान्। यानवाहनाभरणादिष्वेतावदेवेष्टमतोऽन्यदनिष्टमित्यनिष्टान्निवर्त्तनं कर्त्तव्यम्। न हि व्रतमभिसन्धिनियमाभावे मतीष्टानामपि चित्रवस्त्रवेषाभरणादीनामनुपसेव्यानां परित्यागः कार्यो यावज्जीवं। अथ न शक्तिः कालपरिच्छेदेन वस्तुपरिमाणेन च शक्त्यनुरूपं निवर्त्तनं कार्यम्।

उपभोगपरिभोगपरिमाणव्रतस्यातीचाराः पञ्च भवन्ति। सचित्ताहार, सचित्तसम्बन्धाहार, सचित्तसन्मिश्राहार, अभिषवाहार, दुःपक्वाहारश्चेति। तत्र चेतनावद्द्रव्यं सचित्तं हरितकायं तदभ्यवहरणं सचित्ताहारः। सचित्तवतोपश्लिष्टं सचित्तसम्बन्धाहारः। सचित्तेन व्यतिकीर्णं सचित्तसन्मिश्राहारः। सौवीरादिद्रवो वा वृष्यं वाऽभिषवाहारः। सातस्तन्दुलभावेनातिक्लेदनेन वा दुष्टं पक्वो दुःपक्वाहारः। सम्बन्धमिश्रयोरयं भेदः, संसर्गमात्रं सम्बन्धः, सूक्ष्मजन्तुव्याकीर्णत्वाद्विभागीकर्त्तुमशक्यं सन्मिश्रं। एतेषामभ्यवहरणे सचित्तोपयोग इन्द्रियमदवृद्धिर्वाताद्विप्रकोपो वा स्यात्। तत्प्रतीकारविषये पापलेपो भवति। अतिथयश्चैनं परिहरेयुरिति।

संयममविनाशयन्नततीत्यतिथिरथवा नास्य तिथिरस्तीत्यतिथि-

रनियतराश्यगमनमित्यर्थ । अतिथये संविभागोऽतिथिसंविभाग, स चतुर्विध, भिक्षोपकरणौषधप्रतिश्रयभेदात् ।

उक्त हि—

प्रतिग्रहोच्चस्थाने च पादक्षालनमर्चनम् ।
प्रणामो वाग्शुद्धिश्च भिक्षाशुद्धिश्च ते नव ॥

उक्त हि—

श्रद्धा शक्तिरलुब्धत्व भक्तिर्ज्ञान दया क्षमा ।
इति श्रद्धादय सप्त गुणा स्युर्गृहमेधिनाम् ॥

एवविधनवविधपुण्ये प्रतिपत्तिकुशलेन सप्तगुणै समन्वितेन मोक्षमार्गमभ्युद्यतायातिथये सयमपरायणाय शुद्धचेतसाऽऽश्चर्यपच-कादिक्रमनिच्छता निरवद्या भिक्षा देया । धर्मोपकरणानि च सम्यग्दर्शनज्ञानचारित्रोपबृहणानि दातव्यानि । औषधं ज्ञानाय वातपित्तश्लेष्मप्रकोपहताय योग्यमुपयोजनीयम् । प्रतिश्रयश्च परमधर्मश्रद्धया प्रतिपादयितव्य इति ।

अतिथिसविभागव्रतस्य पचातीचारा भवति । सचित्तनिक्षेप, सचित्तपिधान, परव्यपदेश, मात्सर्य, कालातिक्रमश्चेति । तत्र सचित्ते पद्मपत्रादौ निधान सचित्तनिक्षेप । सचित्तेनावरण सचित्त पिधान । अयमत्र दाता दीयमानोऽप्ययमस्येति समर्पण परव्यपदेश । प्रयच्छतोऽपि सत आदरमतरेण दान मात्सर्यम् । अनगाराणाम-योग्ये काले भोजन कालातिक्रम इति । पात्रदान स्वस्य परस्य चोपकार, स्वोपकार पुण्यसचय परोपकार सम्यग्ज्ञानादिवृद्धि । तच्च दान पारपर्येण मोक्षकारण साक्षात्पुण्यहेतु । विधिविशेषाद्-

स्यविशेषाद्दातृविशेषात्पात्रविशेषाद्दानविशेष । तत्र प्रतिग्रहोच्चदेशं स्थापनमित्येवमादीना क्रियाणामादरेण करण विधिविशेष । दीयमानेऽन्नादौ प्रतिग्रहीतुस्तप स्वाध्यायपरिवृद्धिकरणत्वाद्द्रव्यविशेष । प्रतिग्रहीतृजनेऽभ्यस्ततया त्यागोऽविषादो दित्सतो ददतो दत्तवतश्च प्रीतियोग, कुशलाभिसंधितावसुधारासुरप्रशंसादिदृष्टफलानपेक्षिता, निरपरोधत्वमनिदानत्वे श्रद्धादिगुणसमन्वितत्वमित्येवमादि दातृविशेष । मोक्षकारणगुणसंयोगः पात्रविशेष । ततश्च फलविशेष ।

> सत्पात्रोपगत दान सुक्षेत्रगतबीजवत् ।
> फलाय यद्यपि स्वल्प तदनल्पाय कल्प्यते ॥

तथा च—दानफलविशेषेणोत्तमभोगभूमौ दशविधकल्पवृक्षोत्थ निःसमसुखफल श्रीषेणोऽन्वभूत् ।

तथा च—दानानुमोदेन रतिवररतिवेगाख्य कपोतमिथुन विजयार्द्धप्रतिबद्धगान्धारविषयसुसीमानगराधिपतेरादित्यगते रतिवरवरो हिरण्यवर्मनामा नन्दनोऽभूत् । तस्मिन्नेव गिरौ गिरिविषये भोगपुरपतेर्वायुरथस्य रतिवेगचरी प्रभावत्याख्या तनयाऽभूत् । एवं हिरण्यवर्मा प्रभावती च जातिकुलसाधितविद्याप्रभावेन सुखमन्वभूताम् ।

उक्तहिंसादिपञ्चदोषविरहितेन द्यूतमद्यमांसानि परिहर्तव्यानि । तथा चोक्त महापुराणे—

> हिंसासत्यस्तेयादब्रह्मपरिग्रहाच्च बादरभेदात् ।
> द्यूतान्मांसान्मद्याद्विरतिर्गृहिणोऽष्ट सन्त्यमी मूलगुणा ॥

कितवस्य सदा रागद्वेषमोहवञ्चनानृतानि प्रजायतेऽर्थक्षयोऽपि भवति जनेष्वविश्वसनीयश्च, सप्तव्यसनेषु प्रधान द्यूत तस्मात्तत्परिहर्तव्यम् ।

तथा च–भरतेऽस्मिन्कुलाटविषये श्रावस्तिपुराधिपति मुकेतुमहाराजो महाभोगी द्यूतव्यसनाभिहत स्वीयं कोश राष्ट्रमत पुर च द्यूते हारयित्वा महादुःखाभिभूतोऽभूत् । तथा च युधिष्ठिरोऽपि द्यूतेन राज्याद्भ्रष्ट कष्टा दशामवाप ।

मांसाभिवृत्तिरहिंसाव्रतपरिपालनार्थं, मांसाशिन साधवो निन्दन्ति प्रत्ये च दु खभाग्भवति । तथा चान्यैरुक्तम्—

*मां स भक्षयिता प्रेत्य यस्य मांसमिहाद्म्यहम् ।*
*एतन्मांसस्य मांसत्व प्रवदति मनीषिण ॥*
*मांस प्राणिशरीर प्राण्यगस्य च विदारणेन विना ।*
*तस्मात्प्यते ततस्तत्त्यक्त जैनै सदा सर्व ॥*

तथा हि–कुमनाम्नो नरपतेर्भीमो नाम महानसिकस्तिर्यग्मासमलभमानो मृतशिशुमांस सर्वतभावेण सम्मिश्र कृत्वा कुभस्य दत्तवान् । तत प्रभृति सोऽपि नरमांसलोलुप सजात । तज्ज्ञात्वा प्रकृतयो राज्यस्यायमयोग्य इति त परिहृतवत्य । तत्र च विन्ध्यमलकुटजवने निरातमुग्य खदिरसार समाधिगुप्तमुनिं दृष्ट्वा प्रणत स्तस्मै धर्मलाभ इत्युक्ते कोऽसौ धर्म, कोऽसो लाभ इत्युक्तपरिप्रश्ने मांसादिनिवृत्तिर्धर्मस्तत्प्राप्तिर्लाभस्तत स्वर्गादिसुख जायत इत्युक्तवति मुनौ तत्सर्वं परिहर्तुमहमशक्त इति वचने तदाकूतमवधार्य त्वया काकमास पूर्वं किं भक्षितमुत न वेत्युक्तेऽभक्षणोऽहमिति प्रतिवचने यद्येव तद्भक्षणव्रत त्वया गृह्यतामित्युपदेशेन तत्परिगृह्य भिवद्य गतवत कान्तारे तस्यामये समुत्पन्ने सति वैद्येन काकमास भक्षणादस्य व्याधेरुपशमो भविष्यतीत्युक्ते कण्ठगतेष्वपि प्राणेषु मया न कर्तव्य तत्काकमासोपयोगविरमणव्रत तपोधनसमीपे परि-

गृहीत, सत्यभगे कुन सत्पुरुषता ? तत काकमासाभ्यवहरणं न करिष्यामीति प्रतिज्ञाने समुपरक्षिततटीयान्तस्त मासमुपयोजयितु सौरपुराधिपति शूरवीरनामा तस्य मैथुन समागच्छन् वनगहनगत वटतरोरध काचिदभिरुदतीं समीक्ष्य 'कथय केन हेतुना रोदिष्येका त्वम्' इत्यनुयुक्ता साऽवोचदह यक्षी । तव श्यालक खल्व दामयपरिपीडित मासभक्षणविरमणव्रतफलेन मे भविष्यतमधिपतिं भवानद्य मासभोजनेन नरकगतिभागिन कर्तुं प्रारभत इति रोदनमनुभवामीति तयोदित 'श्रद्धेहि' तदह न कारयिष्यामीति व्याहृत्य गत्वा तमवलोक्य शरीरामयनिराकरणहेतुस्त्वया मासोपयोग क्रियतामिति प्रियश्यालस्ववचनश्रवणेन 'त्व प्राणसमो बधु श्रेय एव मे कथयितुमर्हसि, न हितार्थवचनमेतन्नरकगतिप्रापणहेतुत्वान्त्व म्रियमाणोऽपि म्रिये न तु प्रतिज्ञाहानिं करोमि' इति निगन्तितस्तदभिप्रायविचारणात्स तस्मै यक्षीनिरूपितवृत्तातमकथयत् । सोऽपि तदाकर्णनादहिंसादिश्रावकव्रतमविकलमादाय जीवितान्ते सौधर्मकल्पे देवोऽभवत् । शूरवीरश्च तस्य परलोकक्रियावसान उपगच्छन् यक्षीं निरीक्ष्य कथय ॥ किं मे मैथुनस्तत्र पतिरजायतेति परिपृष्टा साऽवोचत् । स्वीकृतममस्तव्रतसमहस्यामुल्यल्यनरगति पराङ्मुखस्य सौधर्मकल्पे समुत्पत्तिरासीत्, ततो मदधिपत्वप्रच्युत प्रकृष्टदिव्यभोगमनुभवतीति हृदयगततद्वचनार्थनिश्चितमतिरहो व्रतप्रभाव समभिलषितफलप्रदानसमर्थ इति समाधिगुप्तिमुनिसमीपे परिगृहीतश्रावकव्रतो [illegible] ऽसारो द्विसागरोपमकाल दिव्यभोगमनुभूय सम[illegible] [illegible] स्वजीवितान्ते तत प्रच्युत सन्यत

सुमित्रनामा मित्रराज्ञः पुत्रोऽभूत् । निर्दर्शनतपः कृत्वा व्यंतर आसीत्तत्र कुणिकनरपते श्रीमतीदेव्याश्च श्रेणिकोऽभूदिति । एवं दृष्टादृष्टफलम्याप्यहितं मांसम् ।

मद्यपस्य हिताहितविवेकता वाच्यावाच्यता गम्यागम्यता कार्या कार्यं च नास्ति । मद्यमुपसेविनो जनस्य स्मृतिं विनाशयति, विनष्ट स्मृतिश्च किं न करोति, किं न भाषते, कमुन्मार्गं न गच्छति, सर्व दोषाणामास्पदं तदेव तस्याख्यानम् ।

तथा हि——कश्चिद्ब्राह्मणो गुणी गंगास्नानार्थं गच्छन्नटवीप्रदेशे प्रहसनशीलेन मदिरामदोन्मत्तेन कांतासहितशबरेण स निरुध्य मांसभक्षणसुरापानशबरीससर्गेषु भवताऽन्यतममगीकरणीयमन्यथा भवत प्राणापहारमीत्युक्त किंकर्तव्यतामूढ , प्राण्यगज्जान्मांसभक्षणे पापोपलेपो भवति, शबरीससर्गे जातिनाश समायते, पिष्टोदकगुड-धातक्यादिसमुत्पन्नं निरवद्य मद्यमिदं पिबामीति पीत्वा विनष्टस्मृति रगम्यागमनमभक्ष्यभक्षणं च कृतवान् । तथा हि—मद्यपायिनामपराधेन द्वीपायनमुनिरोषाद्भस्मीभूताया द्वारवत्या विनष्टा यादवा इति ।

> मत्तो हिनस्ति सर्वं मिथ्या प्रलपति विवेकविकलतया ।
> मातरमपि कामयते सावद्यं मद्यमत एव ॥

सामायिके सध्यात्रयेऽपि भुवनत्रयस्वामिनं वदमानो वक्ष्यमाण व्युत्सर्गतपसि कथितक्रमेण ।

> द्विनिषण्णं यथाजात द्वादशावर्त्तमित्यपि ।
> चतुर्नतिं त्रिशुद्धं च कृतिकर्म प्रयोजयेत् ॥

अस्य सामायिकस्यानंतरोक्तशीलसप्तकांतर्गतं सामायिकं व्रत
व्रतिकस्य शीलं भवतीति।

प्रोषधोपवासं मासे मासे चतुर्ष्वपि पर्वदिनेषु स्वकीयां शक्ति-
मनिगूह्य प्रोषधनियमं मन्यमानो भवतीति व्रतिकस्य यदुक्तं शीलं
प्रोषधोपवासस्तदस्य व्रतमिति।

सचित्तव्रतो दयामूर्तिर्मूलफलशाखाकरीरकन्दपुष्पबीजादीनि न
भक्षयत्यस्योपभोगपरिभोगपरिमाणशीलव्रतातिचारो व्रतं भवतीति।

रात्रिभक्तव्रतो रात्रौ स्त्रीणां भजनं रात्रिभक्तं तद्व्रतयति सेवत
इति रात्रिव्रतातिचारो रात्रिभक्तव्रत दिवाब्रह्मचारीत्यर्थः। ब्रह्मचारी
शुक्रशोणितबीजं रसरुधिरमांसमेदोऽस्थिमज्जाशुक्रसप्तधातुमयमनेक-
स्रोतोबिलं मूत्रपुरीषभाजनं कृमिकुलाकुलं विविधव्याधिविधुरमपायप्रायं
कृमिभस्मविष्टापर्यवसानमङ्गमित्यनङ्गाद्विरतो भवति।

आरम्भविनिवृत्तोऽसिमसिकृषिवाणिज्यप्रमुखादारम्भात्प्राणाति[illegible]
तोर्विरतो भवति। परिग्रहविनिवृत्तः क्रोधादिकषाया[illegible]
हिंसादिपंचपापानां भयस्य च जन्मभूमिः, दूरोत्[illegible]
परिग्रह इति मत्वा दशविधबाह्यपरिग्रहाद्विनिवृत्तः [illegible]
परो भवति।

अनुमतिविनिवृत्तः आहारादीनामारम्भ[illegible]
भवति।

उद्दिष्टविनिवृत्तः स्वोद्दिष्टपिंडोपधिशयन[illegible]
टकधरो भिक्षाशनः पाणिपात्रपुटेनोपविश्य [illegible]
समुद्यन् आतापनादियोगरहितो भवति।

अणुव्रतिमहाव्रतिनौ समितियुक्तौ संयमिनौ भवतः समितिं विना विरतौ। तथा चोक्तं वर्गणाखण्डस्य बन्धनाधिकारे—

संजमविरईणं को भेदो, ससमिदिमहव्वयाणुव्वयाइं संजमो,
समईहिं विणा महव्वयाणुव्वयाइं विरदी॥ इति—

आद्यास्तु षड् जघन्याः स्युर्मध्यमास्तदनु त्रयः।
शेषौ द्वावुत्तमावुक्तौ जैनेषु जिनशासने॥

असिमषिकृषिवाणिज्यादिभिर्गृहस्थानां हिंसासंभवेऽपि पक्षचर्यासाधकत्वैर्हिंसाऽभावः क्रियते। तत्राहिंसापरिणामत्वं पक्षः। धर्मार्थं देवतार्थं मन्त्रसिद्ध्यर्थमौषधार्थमाहारार्थं स्वभोगार्थं च गृहमेधिनो हिंसां न कुर्वन्ति। हिंसासंभवे प्रायश्चित्तविधिना विशुद्धः सन् परिग्रहपरित्यागकरणे सति स्वगृहं धर्मं च वंश्याय समर्प्य यावद्गृहं परित्यजति तावदस्य चर्या भवति। सकलगुणसंपूर्णस्य शरीरकम्पनोच्छ्वासनोन्मीलनविधिं परिहरमाणस्य लोकाग्रमनसः शरीरपरित्यागः साधकत्वमेव पक्षादिभिस्त्रिभिर्हिंसाद्युपचितं पापमपगतं भवति।

जैनागमे चत्वार आश्रमाः—उक्तं चोपासकाध्ययने।

ब्रह्मचारी गृहस्थश्च वानप्रस्थश्च भिक्षुकः।
इत्याश्रमास्तु जैनानां सप्तमाङ्गाद्विनिःसृताः॥

तत्र ब्रह्मचारिणः पञ्चविधाः—उपनयावलम्बादीक्षागूढनैष्ठिकभेदेन। तत्रोपनयब्रह्मचारिणो गणधरसूत्रधारिणः समभ्यस्तागमा गृहधर्मानुष्ठायिनो भवन्ति। अवलम्बब्रह्मचारिणः क्षुल्लकरूपेणागममभ्यस्य परिगृहीतगृहावासा भवन्ति। अदीक्षाब्रह्मचारिणः वेषमन्तरेणाभ्यस्तागमा गृहधर्मनिरता भवन्ति। गूढब्रह्मचारिणः कुमारश्रमणाः सन्

स्वीकृतागमाभ्यासा बन्धुभिर्दु सहपरीषहैरात्मना नृपतिभिर्वा निरस्तपरमेश्वररूपा गृहवासरता भवति। नैष्ठिकब्रह्मचारिण समाधिगतशिखालक्षितशिरोलिंगा गणधरसूत्रोपलक्षितोरोलिंगा, शुक्लरक्तवसनखण्डकौपीनलक्षितकटीलिंगा स्नातका भिक्षावृत्तयो देवतार्चनपरा भवति।

गृहस्थस्येज्या, वार्ता, दत्ति, स्वाध्याय, सयम, तप इत्यार्यषट्कर्माणि भवति। तत्रार्हत्पूजेज्या, सा च नित्यमहश्चतुर्मुख रथवृक्षोऽष्टाह्निक ऐन्द्रध्वज इति। तत्र नित्यमहो नित्य, यथाशक्ति जिनगृहेभ्यो निजगृहाद्गन्धपुष्पाक्षतादिनिवेदन, चैत्यचैत्यालय कृत्वा ग्रामक्षेत्रादीना शासनदान मुनिजनपूजन च भवति। चतुर्मुख मुकुटबद्धै क्रियमाणा पूजा सैव महामह सर्वतोभद्र इति। कल्पवृक्षोर्थिन प्रार्थितार्थै सतर्प्य चक्रवर्तिनि क्रियमाणो मह। अष्टाह्निक प्रतीत। ऐन्द्रध्वज इन्द्रादिभि क्रियमाण बलिस्नपन सध्यात्रयेऽपि जगत्त्रयस्वामिन पूजाऽभिषेककरणम्। पुनरस्येषा विकल्पा अन्येऽपि पूजाविशेषा सन्तीति। वार्ताऽसिमषिकृषिवाणिज्यादिशिल्पकर्मभिर्विशुद्धवृत्त्याऽर्थोपार्जनमिति। दत्ति दयापात्रसमसकलभेदाच्चतुर्धा। तत्र दयादत्तिरनुकपयाऽनुग्राह्येभ्य प्राणिभ्यस्त्रिशुद्धिभिरभयदानम्। पात्रदत्तिर्महातपोधनेभ्य प्रतिग्रहार्चनादिपूर्वक निरवद्याहारदान ज्ञानसयमोपकरणादिदान च। समदत्ति स्वसमक्रियाय मित्राय निस्तारकोत्तमाय कन्याभूमिसुवर्णहस्त्यश्वरथरत्नादिदान, स्वसमानाभावे मध्यमपात्रस्यापि दानम्। सकलदत्तिरात्मीयस्वसततिस्थापनार्थं पुत्राय गोत्रजाय वा धर्म धन च समर्प्य प्रदान-

मन्वय सिद्ध सैव । स्वाध्यायस्तत्त्वज्ञानस्याध्ययनमध्यापनं स्मरणं च । संयमः पञ्चाणुव्रतप्रवर्त्तनम् । तपोऽनशनादिद्वादशविधानुष्ठानम् ।

इत्यार्यषट्कर्मनिरता गृहस्था द्विविधा भवंति । जातिक्षत्रिया स्तीर्थक्षत्रियाश्चेति । तत्र जातिक्षत्रिया क्षत्रियब्राह्मणवैश्यशूद्रभेदाच्चतुर्विधा । तीर्थक्षत्रिया स्वजीवनविकल्पादनेकधा भिद्यते ।

वानप्रस्था अपरिगृहीतजिनरूपा वस्त्रखण्डधारिणो निरतिशयतपःसमुद्यता भवन्ति ।

भिक्षवो जिनरूपधारिणस्ते बहुधा भवंति । अनगारा यतयो मुनय ऋषयश्चेति । तत्रानगाराः सामान्यसाधव उच्यन्ते । यतय उपशमक्षपकश्रेण्यारूढा भण्यन्ते । मुनयोऽवधिमनःपर्ययकेवलज्ञानिनश्च कथ्यन्ते । ऋषयः ऋद्धिप्राप्तास्ते चतुर्विधा, राजब्रह्मदेवपरमभेदात् । तत्र राजर्षयो विक्रियाऽक्षीणर्द्धिप्राप्ता भवंति । ब्रह्मर्षयो बुद्ध्यौषधिऋद्धियुक्ता कीर्त्यन्ते । देवर्षयो गगनगमनर्द्धिसंयुक्ता कथ्यन्ते । परमर्षयः केवलज्ञानिनो निगद्यते ।

अपि च ।

देशप्रत्यक्षवित्केवलभृदिह मुनिः स्यादृषिः प्रोद्गतर्द्धि—
रारूढश्रेणियुग्मोऽजनि यतिरनगारोऽपरः साधुरुक्तः ।
राजा ब्रह्मा च देवः परम इति ऋषिर्विक्रियाऽक्षीणशक्ति—
प्राप्तो बुद्ध्यौषधीशो वियदयनपटुर्विश्ववेदी क्रमेण ॥

उक्तैरुपासकैर्मारणान्तिकी सल्लेखना प्रीत्या सेव्या । स्वपरिणामोपात्तस्यायुष इन्द्रियाणां बलानामुच्छ्वासनिःश्वासस्य च कदलीघातवत्स्वपाकच्युतिकारणवशात्संक्षयो मरणं, तच्च द्विविधं,

नित्यमरण तद्भवमरण चेति । तत्र नित्यमरण समये समये स्वायुरादीना निवृत्ति । तद्भवमरण भवान्तरप्राप्तिरनन्तरोपश्लिष्टपूर्वभवविगमनम् । अत्र पुनस्तद्भवमरण ग्राह्य मरणान्त प्रयोजनमस्या इति मारणान्तिकी । बाह्यस्य कायस्याभ्यन्तराणा कषायाना तत्कारणहापनया क्रमेण सम्यग्लेखना सल्लेखना । उपसर्गे दुर्भिक्षे जरसि नि प्रतिक्रियाया धर्मार्थे तनुत्यजन सल्लेखना । ततो नित्यप्रार्थितसमाधिमरणे यथाशक्ति प्रयत्न कृत्वा शीतोष्णाद्युपश्लेषे सति तप स्थो यथा शीतोष्णादौ हर्षविषाद न करोति तथा सल्लेखना कुर्वाण शीतोष्णादौ हर्षविषादमकृत्वा स्नेह सगवैरादिक परिग्रह च परित्यज्य विशुद्धचित्त स्वजनपरिजने क्षन्तव्य नि शल्य च प्रियवचनैर्विधाय विगतमानकषाय कृतकारितानुमतमेन सर्वमालोच्य गुरौ महाव्रतमामरणमारोप्यारतिदैन्यविषादभयकालुष्यादिकमपहाय सत्त्वोत्साहमुदीर्य श्रुतामृतेन मन प्रसाद्य क्रमेणाहार परिहाय तत स्निग्धपान तदनन्तर खरपान तदनु चोपवास कृत्वा गुरो पादमूले पचनमस्कारमुच्चारयन्पचपरमेष्ठिना गुणान्स्मरन्सर्वयत्नेन तनु त्यजेदिय सल्लेखना सयतस्यापि ।

अथ सल्लेखनाया मरणविशेषोत्पादनसमर्थाया असक्लिष्टचित्तनारम्याया पचातीचारा भवन्ति । जीविताशसा, मरणाशसा, मित्रानुराग , सुखानुबन्ध , निदान चेति । तत्र शरीरमिदमवश्य हेय जलबुद्बुदवदनित्यमस्यावस्थान कथ स्यादित्यादरो जीविताशसा । आशसाऽऽकाक्षणमभिलाष इत्यनर्थान्तर । रोगोपद्रवाकुलतया प्राप्तजीवनसक्लेशस्य मरण प्रति चित्तप्रणिधान मरणाशसा । व्यसने

सहायत्वमुत्सवे मन्त्रम इत्येवमादि सुकृत बाल्ये सह पांसुक्रीडनमित्येवमादीनामनुस्मरणं मित्रानुरागः। एवं मया भुक्तं शयितं क्रीडितमित्येवमादि प्रीतिविशेषं प्रति स्मृतिसमन्वाहारः सुखानुबन्धः। विषयसुखोत्कर्षाभिलाषभोगाकांक्षतया नियतं चित्तं दीयते तस्मिन् तेनेति वा निदानमिति ॥

इति श्रीमच्चामुण्डरायप्रणीते भावनासंग्रहे चारित्रसारे श्रावकधर्मः

सप्तमोऽध्यायः।

---

## षोडशभावनाप्रकरणम्।

उत्तरेकादशोपासकैर्वक्ष्यमाणदशधर्माधारस्य मनुष्यगतौ केवलज्ञानोपलक्षितजीवद्रव्यसहकारिकारणसंबन्धमारभस्यानन्तानुपमप्रभावस्याचिन्त्यविशेषविभूतिकारणस्य त्रैलोक्यविजयकरस्य तीर्थकरनामगोत्रकर्मण कारणानि षोडश भावना भावयितव्या इति। तद्यथा—दर्शनविशुद्धता, विनयसंपन्नता, शीलव्रतेष्वनतीचार, अभीक्ष्णज्ञानोपयोग, संवेग, शक्तितस्त्याग, शक्तितस्तप, साधुसमाधि, वैयावृत्यकरण, अर्हद्भक्ति, आचार्यभक्ति, बहुश्रुतभक्ति, प्रवचनभक्ति, आवश्यकापरिहाणिः, मार्गप्रभावना, प्रवचनवात्सल्यमिति। तत्र जिनोपदिष्टे नैर्ग्रन्थ्ये मोक्षवर्त्मनि रुचिः सम्यग्दर्शनं, विशुद्धि विना दर्शनमात्रादेव तीर्थकरनामकर्मबन्धो न भवति, त्रिमूढापोढाष्टमदादिरहितत्वात्। उपलब्धनिजस्वरूपस्य सम्यग्दर्शनस्य प्रथमद्वितीयोपशमक्षयोपक्षायिका यतमविशिष्टस्य ज्ञानदर्शनतपश्चारित्रेषु त-

द्वत्सु च विनये, अभीक्ष्णज्ञानोपयोगसंवेगयुक्तत्वे, साधुभ्य प्रासुकप्रदाने, द्वादशविधतपसि, साधूना समाधिवैयावृत्त्यकरणे, अर्हत्सु व्रतशीलावश्यकसम्पन्नाचार्येषु च बहुश्रुतेषु प्रवचने च भक्तौ, प्रवचनप्रभावने, प्रवचनवत्सलत्वे प्रवर्त्तन विशुद्धता। एकाऽपि सा दर्शनविशुद्धता तीर्थकरनामबधस्य कारण भवति, शेषभावनाना तत्रैवान्तर्भावादिति दर्शनविशुद्धता व्याख्याता। सम्यग्दर्शनादिषु मोक्षसाधनेषु तत्साधकेषु गुर्वादिषु च स्वयोग्यवृत्त्या सत्कार आदर कषायनोकषायनिवृत्तिर्वा विनयसम्पन्नता। अहिंसादिषु व्रतेषु तत्परिपालनार्थेषु च क्रोधवर्जनादिषु शीलेषु निरवद्या वृत्ति कायवाङ्मनसा शीलव्रतेष्वनतिचार इति। मत्यादिविकल्प ज्ञान जीवादिपदार्थस्वतत्त्वविषय प्रत्यक्षपरोक्षलक्षणमज्ञाननिवृत्त्यव्यवहितफल हिताहितानुभयप्राप्तिपरिहारोपेक्षाव्यवहितफल यत्तस्य भावनाया नित्ययुक्तताऽभीक्ष्णज्ञानोपयोग इति। शारीर मानस च बहुविकल्प प्रियविप्रयोगाप्रियसयोगेप्सितालाभादिजनित ससारदु ख यदतिकष्ट ततो नित्यभीरुता सवेग इति। आहारो दत्त पात्राय तस्मिन्नहनि तत्प्रीतिहेतुर्भवति, अभयदानमुपपादितमेकभवव्यसननोदनकर, सम्यग्ज्ञानदान पुनरनेकभवशतसहस्रदु खोत्तारणकारणमतस्त्रिविधहाराभयज्ञानदानभेदेन यथाविधि प्रतिपाद्यमान त्याग इत्युच्यते। शरीरमिद दु खकारणमनित्यमशुचि नास्य यथेष्ट भोगविधिना परिपोषो युक्त, अशुच्यपीद गुणरत्नसचयोपकारीति विचिन्त्य विनिवृत्तविषयसुखाभिषगमस्य कार्य प्रत्येतद्भृतकमिव नियुञ्जानस्य यथाशक्तिमार्गाविरोधकाय क्लेशानुष्ठान तप इति। यथा भाण्डागारे

समुत्थिते दहने तत्प्रशमनमनुष्ठीयते बहूपकारित्वात्तथाऽनेकव्रत सम्पद्धस्य मुनिगणस्य तपसः कुतश्चित्प्रत्यूहे समुपस्थिते तत्संधारणं साधुसमाधिरिति । गुणवतः साधुजनस्य सन्निहिते दुःखे निरवद्येन विधिना तदपहरणं बहुप्रकारं वैयावृत्त्यमिति । अर्हदाचार्येषु केवल-श्रुतज्ञानदिव्यनयनेषु परहितकरप्रवृत्तिषु स्वपरसमयविस्तरनिश्चय-ज्ञेषु बहुश्रुतेषु प्रवचने च श्रुतदेवतासन्निधिगुणयोगदुरासदे मोक्ष पदप्रासादारोहणसुरचितसोपानभूते भावविशुद्धियुक्तोऽनुरागो भक्ति-स्त्रिधा कल्प्यत इति । षडावश्यकक्रिया, सामायिकं, चतुर्विंशति स्तवं, वंदना, प्रतिक्रमणं, प्रत्याख्यानं, कायोत्सर्गश्चेति । तत्र सामायिकं सर्वसावद्ययोगनिवृत्तिलक्षणं, चित्तस्यैकत्वेन ज्ञानेन प्रणि-धानं वा, शत्रुमित्रमणिपाषाणसुवर्णमृत्तिकाजीवितमरणलाभालाभा-दिषु रागद्वेषाभावो वेति । चतुर्विंशतिस्तवस्तीर्थंकरपुण्यगुणानु कीर्त्तनमिति । वंदना त्रिशुद्धिः द्व्यासनश्चतुःशिरोवनतिर्द्वादशा-वर्त्तना चेति, तत्प्रपंचस्तूत्तरत्र वक्ष्यते । प्रतिक्रमणमतीतदोषनि-वर्त्तनमिति । प्रत्याख्यानमनागतदोषापोहनमिति । कायोत्सर्गः परिमितकालविषयशरीरममत्वनिवृत्तिरिति । एतासां षण्णां क्रियाणां यथाकालं प्रवर्त्तनमनौत्सुक्यमावश्यकापरिहाणिरिति । ज्ञानतपो जिनपूजाविधिना धर्मप्रकाशनं मार्गप्रभावनेति । प्रकृष्टं वचनं प्रव-चनं, प्रकृष्टस्य वा वचनं प्रवचनं, सिद्धान्तो द्वादशाङ्गमित्यनर्था न्तरं, तत्र भवा देशमहाव्रतिनः, असंयतसम्यग्दृष्टयश्च प्रवचनामि त्युच्यते, तेष्वनुरागः आकांक्षा ममेदं भावः प्रवचनवत्सलत्वं । तैनैकेनापि तीर्थंकरनामकर्मबंधो भवति । कृतः पंचमहाव्रताद्या-

ब्रवीतीति क्षन्तव्य । अभावचिन्तनादपि नैते मयि विद्यन्ते दोषा अज्ञानादसौ ब्रवीतीति क्षमा कार्या । अपि च बालस्वभावचिन्तन प्रत्यक्षपरोक्षाक्रोशनताडनमारणधर्मभ्रंशनानामुत्तरोत्तररक्षणार्थं, तद्यथा—परोक्षमाक्रोशति बाले क्षन्तव्यमेव स्वभावा हि बाला भवन्ति, दिष्ट्या च मा परोक्षमाक्रोशति न च प्रत्यक्षमेतदपि बालेष्विति लाभो मन्तव्य एव । प्रत्यक्षमाक्रोशति सोढव्य, विद्यत एतद्बालेषु दिष्ट्या च मा प्रत्यक्षमाक्रोशति, यन्न ताडयत्येतदपि बालेष्विति लाभ एव मतव्य । ताडयत्यपि मर्षितव्य, दिष्ट्या च मा ताडयति न प्राणैर्वियोजयति । एतदपि बालेष्विति लाभ एव मन्तव्य । प्राणैर्वियोजयत्यपि तितिक्षा कर्तव्या, दिष्ट्या च मा प्राणैर्वियोजयति, मद्धीनाद्धर्मात्र भ्रंशयतीति । किञ्चान्यन्ममैवापराधोऽयं यत्पुराऽऽचरितं तन्महद्दुष्कर्म तत्फलमिदमाक्रोशवचनादिनिमित्तमात्रं परोऽयमत्रेति सोढव्यमिति ।

उत्तमजातिकुलरूपविज्ञानैश्वर्यश्रुतलाभतपोलाभवीर्यस्यापि तत्कृतमदाविष्टाभावात्परप्रयुक्तपरिभवनिमित्ताभिमानाभावो मार्दवं माननिर्हरणमवगन्तव्यम् । मार्दवोपेतं गुरवोऽनुगृह्णन्ति, साधवोऽपि साधु मन्यन्ते । ततश्च सम्यग्ज्ञानादीनां पात्रं भवति, अतः स्वर्गापवर्गफलावाप्तिर्मलिनमानसे व्रतशीलानि नावतिष्ठन्ते, साधवश्चैनं परित्यजन्ति, तन्मूला सर्वा विपत्तय इति ।

योगस्य कायवाङ्मनोलक्षणस्यावक्रताऽऽर्जवमित्युच्यते । ऋजुहृदयमधिवसन्तो गुणा मायामावं नाश्रयन्ते, मायाविनो न विश्वासं... लोके गर्हिता च गतिर्भवतीति ।

प्रकर्षप्राप्तलोभनिवृत्तिः शौचमित्युच्यते । शुच्याचारमिहापि सन्मानयन्ति सर्वे, विश्रम्भणादयश्च गुणास्तमधितिष्ठन्ति । लोभभावनाक्रान्तहृदये नावकाशं लभन्ते गुणाः । स च लोभो जीविताऽऽरोग्येन्द्रियोपभोगविषयभेदाच्चतुर्विधः, स्वपरविषयत्वात्स प्रत्येकं द्विधा भिद्यते । स्वजीवितलोभः, परजीवितलोभः, स्वारोग्यलोभः, परारोग्यलोभः, स्वेन्द्रियलोभः, परेन्द्रियलोभः, स्वोपभोगलोभः, परोपभोगलोभश्चेति । अतस्तन्निवृत्तिलक्षणं शौचं चतुर्विधमिति ।

सत्सु प्रशस्तेषु जनेषु साधुवचनं सत्यमित्युच्यते। सत्यसद्भावो दशविधः, नामरूपस्थापनाप्रतीत्यसंवृत्तिसंयोजनाजनपददेशभावसमयसत्यभेदेन । तत्र सचेतनेतरद्रव्यस्यासत्यप्यर्थे यद्व्यवहारार्थं सज्ञाकरणं तन्नामसत्यं, इन्द्र इत्यादि । यदर्थासन्निधानेऽपि रूपमात्रेणोच्यते तद्रूपसत्यं, यथा चित्रपुरुषादिषु । असत्यपि चैतन्योपयोगादावर्थे पुरुष इत्यादि, असत्यप्यर्थे यत्कार्यार्थं स्थापितं द्यूताक्षसारिकानिक्षेपादिषु तत्स्थापनासत्यं, चन्द्रप्रभप्रतिमा इति । सादयनादीनौपशमिकादीन् भावान् प्रतीत्य यद्वचनं तत्प्रतीत्यसत्यं, दीर्घोऽयं पुरुषस्ताल इत्यादि । यल्लोके संवृत्त्या नीतं वचनं तत्संवृतिसत्यं, यथा पृथिव्याद्यनेककारणत्वेऽपि सति पङ्के जातं पङ्कजमित्यादि । धूपचूर्णवासनानुलेपनप्रघर्षादिषु पद्ममकरहंससर्वतोभद्रक्रौञ्चव्यूहादिषु वाऽचेतनेतरद्रव्याणां यथाभागविधानं सन्निवेशाविर्भावकं यद्वचस्तत्संयोजनासत्यम् । द्वात्रिंशज्जनपदेष्वार्यानार्येषु धर्मार्थकाममोक्षाणां प्रापकं यद्वचस्तज्जनपदसत्यं, राजा राणक इत्यादि । ग्रामनगरराजगणपाखण्डजातिकुलादिधर्माणामुपदेष्टृ यद्वचस्तद्देशसत्यं, ग्रामो

वृत्याऽऽवृत इत्यादि । छद्मस्थज्ञानस्य द्रव्ययाथात्म्यादर्शनेऽपि संयतस्य संयतासंयतस्य वा स्वगुणपरिपालनार्थं प्रासुकमिदमप्रासुकमित्यादि यद्वचस्तद्भावसत्यं । प्रतिनियतषड्द्रव्यपर्यायाणामागमगम्यानां याथात्म्याऽऽविष्करणं यद्वचस्तत्समयसत्यं, समयोत्तरवृद्ध्या रोमो युगः पल्योपम इत्यादि । सत्यवाचि प्रतिष्ठिताः सर्वगुणसम्पदः, अनृताभिभाषिणं बन्धवोऽप्यवमन्यन्ते, मित्राणि च विरक्तभावमुपयान्ति, विषाऽम्बुदकादीन्यप्येनं न सहन्ते, जिह्वाच्छेदसर्वस्वहरणादिव्यसनभाग्भवतीति ।

संयमो द्विधा—उपेक्षाऽपहृतभेदेन । तत्र देशकालविधानज्ञस्य परानुपरोधेनोत्सृष्टकायस्य कायवाङ्मनःकर्मयोगानां कृतनिग्रहस्य त्रिगुप्तिगुप्तस्य रागद्वेषानभिष्वङ्गलक्षण उपेक्षासंयमः । अपहृतसंयमस्य समितयः कार्यान्ता उच्यन्ते, ईर्याभाषैषणाऽऽदाननिक्षेपोत्सर्गाः समितयः । तत्रेर्यासमितिर्नाम कर्मोदयाऽऽपादितविशेषैकद्वित्रिचतुःपञ्चेन्द्रियभेदेन चतुर्दशजीवस्थानादिविधानवेदिनो मुनेर्धर्मार्थं प्रयतमानस्य सवितर्युदिते चक्षुषो विषयग्रहणसामर्थ्यमुपजनयति मनुष्यहस्त्यश्वशकटगोकुलादिचरणपातोपहतावश्याये प्रालेयमार्गेऽनन्यमनसः शनैर्न्यस्तपादस्य संकुचितावयवस्योत्सृष्टपार्श्वदृष्टेर्युगमात्रपूर्वनिरीक्षणावहितलोचनस्य स्थित्वा दिशो विलोकयतः पृथिव्याद्यारम्भाभावादीर्यासमितिरित्याख्यायते । हितमितासंदिग्धाभिधानं भाषासमितिः मोक्षपदप्रापणप्रधानफलं हितं, तद्द्विविधं, स्वहितं, परहितं चेति । मितमनर्थकबहुप्रलापरहितं । स्फुटार्थं व्यक्ताक्षरं चाऽसंदिग्धं । तस्याः प्रपञ्चो मिथ्याभिधानासूयाप्रियसंभे-

दाल्पमारशक्तिप्रातसकषायपरिहासायुक्तासम्यग्ज्ञापनानिपुरधर्मविरोधिदेशकालविरोध्यत्तिसम्तवादिवाग्दोषविरहिताभिधानम् । अनगारस्य मोक्षैकप्रयोजनस्य प्राणिदयातत्परस्य कायस्थित्यर्थं प्राणयात्रानिमित्त तपोबृंहणार्थं च चर्यानिमित्त पर्यटत शीलगुणसयमादिक मरक्षत ससारशरीरभोगनिर्वेदत्रय भावयतो दृष्टवस्तुयाथात्म्यस्वरूप चिन्तयतो देशकालसारव्यादिविशिष्टमगर्हितमभ्यवहरण नवकोटिपरिशुद्धमेषणसमिति । षट्जीवनिकायस्योपद्रव उपद्रवण, अगच्छेदनादिव्यापारो विद्रावण, सतापजनन परितापन, प्राणिप्राणव्यपरोपणमारम्भ, एवमुपद्रवणविद्रावणपरितापनारम्भक्रियया निष्पन्नमन्न स्वेन कृत परेण कारित वाऽनुमनित वाऽध कर्म ( जनितं ) तत्सेविनोऽनशनादितपास्थ्रावकाशादियोगा वीरासनादियोगविशेपाश्च भिन्नभाजनपरितामृतवत्प्रक्षरन्ति, ततश्च तदभक्ष्यमिव परिहरतो भिक्षो परकृतप्रशस्तप्रासुकाऽऽहारग्रहणेऽपि षट्चत्वारिंशद्दोषा भवन्ति तद्यथा–षोडशविधा उद्गमदोषा, षोडशविधा उत्पादनदोषा, दशविधा एपणादोषा सयोजनाप्रमाणाङ्गारधूमदोषाश्चत्वार, एतैर्दोषै परिवर्जितमाहारग्रहणमेपणासमितिरिति । नै सङ्क्लिकीं चर्यामातिष्ठमानस्य पात्रग्रहणे सति तत्सरक्षणादिकृतो दोष प्रसज्यते । कपाऽमन्यद्वा भाजनमादाय पर्यटतो भिक्षोर्दैन्यमासज्यते । गृहिजनानीतमपि भाजन न सर्वत्र सुलभ तत्प्रक्षालनादिविधौ च दु परिहार पापलेप । स्वभाजनेन देशान्तर नीत्वा भोजने चाशानुबन्धन स्यात् स्वपूर्वविशिष्टभाजनाधिकगुणासभवाच्च । न केनचिद्दुनानस्य दैन्य स्यात् । ततो नि सगस्य निष्पारि-

ग्रहस्य भिक्षो स्वकरपुटमाजनालान्यद्भिरिष्टमत्तिस्तस्मात्स्वायतेन पाणिपुटेन निराबाधे देशे निरालम्बचतुरगुलान्तरसमपादाभ्या स्थित्वा परीक्ष्य भुञ्जानस्य निभृतस्य तद्गतदोषाभाव । धर्माविरोधिना परानुपरोधिना द्रव्याणा ज्ञानादिसाधनाना ग्रहणे विसर्जने च निरीक्ष्य प्रमृज्य प्रवर्तनमादाननिक्षेपणसमितिः । स्थावराणा जगमाना च जीवानामविरोधेनागमलनिर्हरण शरीरस्य च स्थापनमुत्सर्गसमितिः । एव गमनभाषणाभ्यवहरणग्रहणनिक्षेपोत्सर्गलक्षणपचसमितिविधाने ऽप्रमत्ताना तत्प्रणालिकाप्रसृतकर्मोऽभावान्निभृतानां सवर सिद्धयति ।

एवमीर्यासमित्यादिषु वर्तमानस्य मुनेस्तत्प्रतिपालनार्थं प्राणीन्द्रियपरिहारोऽपहृतसयम । एकेन्द्रियादिप्राणिपीडापरिहार प्राणसयम । इन्द्रियार्थेषु रागानभिष्वङ्ग इन्द्रियसयम । स चाप हृतसयमस्त्रिविध, उत्कृष्टो मध्यमो जघन्यश्चेति । तत्र प्रासुकवसत्याहारमात्रबाह्यसाधनस्य स्वाधीनेतरज्ञानचरणकरणस्य बाह्यजन्तूपनिपाते आत्मान ततोऽपहृत्य जीवान्परिपालयत उत्कृष्ट । मृदुना प्रमृज्य जन्तून्परिहरतो मध्यम । उपकरणान्तरेच्छया जघन्य ।

तस्यापहृतसयमस्य प्रतिपालनार्थं शुद्ध्यष्टकोपदेश । तद्यथा—अष्टौ शुद्धय । भावशुद्धि, कायशुद्धि, विनयशुद्धि, ईर्यापथशुद्धि, भिक्षाशुद्धि, । प्रतिष्ठापनाशुद्धि, शयनासनशुद्धि, वाक्यशुद्धिश्चेति । तत्र भावशुद्धि कर्मक्षयोपशमजनिता मोक्षमार्गरुच्याहितप्रसादा रागाद्युपप्लवरहिता, तस्या सत्यामाचार प्रकाशते परिशुद्धभित्तिगतचित्रकर्मवत् । तथा चोक्तमपरग्रन्थे—

आधाकम्मुद्देसिय अज्झोवज्झेय पूदि मिस्सेय।
दुविदे वलि पाहुडिय पादुक्कारेय कीदेय॥
पामिच्छे परियट्टे अभिहडमुब्भिण्ण मालमारोहे।
अच्छिज्जे अणिसिट्ठे उग्गमदोसो दु सोलसमो॥

आधाकम्म गृहस्थाश्रित पञ्चशूनोपेत निकृष्टव्यापार षट्जीवनिकायवधकर षट्चत्वारिंशद्दोषेभ्यो बाह्य उद्देसिय उद्देश्य देय। अज्झोवज्झेय यतिं दृष्ट्वाऽधिकपाकप्रवृत्ति। पूदि अप्रासुकमिश्रिताहार। मिस्सेय असंयतैः सह भोजन। दुविदे पाकभाजनादन्यत्र निक्षिप्त। वलि यक्षादिदत्तनैवेद्यशेष। पाहुडिय काल परावृत्य दत्त। पादुक्कारेय संक्रमणप्रकाशनरूप। कीदेय क्रीत्वा नीत। पामिच्छे उद्धारानीत। परियट्टे परावृत्त्याऽऽनीत। अभिहडं देशान्तरागतवस्तु। उब्भिण्ण उद्भिन्न बंधनापनयन। मालारोहण मालामारुह्य दत्त। अच्छिज्जे भीत्वा दत्त। अणिसिट्ठे निश्रेण्यादिकमनरुह्य दत्त। एते षोडशोद्गमदोषा भवन्ति।

धादीदूदनिमित्ते आजीवे वणिवगे तहेव तिगिंच्छे
कोधी माणी मायी लोभी य हवन्ति दस एदे॥
पुव्वी पच्छा संथुदि विज्जा मंतेय चुण्णजोगेय।
उप्पादणाय दोसा सोलसमे मूलकम्मेय॥

धादी धात्रिका। दूदा लेखादिनेता। निमित्त निमित्तशास्त्र। आजीवो जीविका। वणिवगे दातुरनुकूलवचन। तिगिंछे वैद्यकशास्त्र। क्रोधी। मानी। मायावी। लोभी। पुव्वी दानग्रहणात्पूर्वस्तुति। पच्छा दान गृहीत्वा पश्चात्स्तवन। विज्जा आकाशगमनादि। मंतेय मनस्पर्शि [illegible]। चुण्णजोगय तनुसंस्कारहे-

तुसुगधिद्रव्यरज । मुलकम्मेय वशीकरण । एते षोडशोत्पादन दोषा भवन्ति ।

सकिदा सन्दिह्यमान । मक्खिदा तैलाद्यभ्यक्त । णिक्खिदा अप्रासुकेोपस्थापित । पिहिय सचित्तादिपरिस्थापित । साहरणा झटिति ग्रहण । दायग सदोषदाता । उम्मिस्से अप्रासुकमिश्र । अपरिणद अविध्वस्त । लित्ता खटिकादिलिप्त । छोडिद् त्यक्त्वाऽऽदिभोजन । एते दशैषणा दोषा ।

सयोयणा स्वादनिमित्त शीतोष्णभक्तपानादिमिश्रण । अप्पमाण मात्राधिक्य । इगाल सगृद्धिभोजन । धूम निंदयन् भुक्ते । एते ऽप्येषणादोषा भवन्ति ।

एतैर्षट्चत्वारिंशद्दोषै परिवर्जितैषणासमितिर्भवति ।

कायशुद्धिर्निरावरणा निरस्तसंस्कारा यथाजातमलधारिणी निराकृतागविकारा सर्वत्र प्रयत्नवृत्ति प्रशममूर्तिमिव प्रदर्शयन्ती तस्या सत्या न स्वतोऽन्यस्य भयमुपजायते नाप्यन्यत स्वस्य । विनयशुद्धिरर्हदादिपरमगुरुषु यथाऽर्हपूजाप्रवणा ज्ञानादिषु च यथाविधिभक्तियुक्ता गुरो सर्वत्रानुकूलवृत्ति प्रश्नस्वाध्यायवाचनाकथाविज्ञापनादिषु प्रतिपत्तिकुशला देशकालभावावबोधनिपुणाऽऽचार्यानुमतचारिणी तन्मूला सर्वसपद सैव भूषा पुरुषस्य सैव नौ ससारसमुद्रोत्तरणे । ईर्यापथशुद्धिर्नानाविधजीवस्थाना योनीनामाश्रयाणा-

१ क" पुस्तके एष उद्गमदोषादिप्रस्ताव एषणासमितिप्रकरणे लिखितोऽस्ति तत्रैव मनोज्ञतया प्रतिभाति प्रस्तुतत्वविशेषात् । अत्र विस्मृ य लिखित इति पाठका क्षमा विदधतु-प्रार्थी, इन्द्रलाल शास्त्री ।

मेव योग्यजनितप्रयत्नपरिहृतजन्तुपीडाज्ञानादित्यस्वेन्द्रियप्रकाश-निरीक्षितदेशगामिनी द्रुतविलम्बितसम्भ्रान्तविस्मितलीलाविकारदिगन्त-रावलोकनादिदोषविरहितगमना तस्यां सत्यां संयमः प्रतिष्ठितो भवति विभव इव सुनीतौ । भिक्षाशुद्धिः परीक्षितोभयप्रचारा प्रमृष्ट-पूर्वापरस्वाङ्गदेशविधानाऽऽचारसूत्रोक्तकालदेशप्रकृतिप्रतिपत्तिकुशला लाभालाभमानापमानसमानमनोवृत्तिः गीतनृत्तप्रसूतिकामृतकसुरा-पण्याङ्गनापापकर्मदीनानाथदानशालायजनविवाहादिमङ्गलगेहपरिवर्ज-नपरा चन्द्रगतिरिव हीनाधिकगृहविशिष्टोपस्थाना लोकगर्हितकुलप-रिवर्जनोपलक्षिता दीनवृत्तिविगमा प्रासुकाऽऽहारगवेषणाप्रणिधानाऽऽ-गमविहितनिरवद्याशनपरिप्राप्तप्राणयात्राफला तत्प्रतिबद्धा हि चरणस-म्पद्गुणसम्पदिव साधुजनसेवानिबन्धना सा लाभालाभयोः सरसविरसयोश्च समसन्तोषवद्भिर्भिक्षेति भाष्यते। भिक्षाशुद्धिपरस्य मुनेरशनं पञ्चविधं भवति, गोचाराक्षम्रक्षणोदराग्निप्रशमनभ्रमराहारश्वभ्रपूरणनामभेदेन । यथा सलीलसालङ्कारयुवतिभिरुपनीयमानघासो गौर्न तद्गतसौन्दर्य-निरीक्षणपरस्तृणमेवाऽत्ति यथा वा तृणोलपं नानादेशस्थं यथालाभम-भ्यवहरति न योजनासम्पदमपेक्षते तथा भिक्षुरपि भिक्षापरिवेषकजन-मृदुललिततनुरूपवेषाभिलापविलोकननिरुत्सुकः शुष्कद्रवाहारयोजनावि-शेषं चानवेक्षमाणो यथाऽऽगतमश्नातीति गोरिव चारो 'गोचार' इति व्यपदिश्यते तथा गवेषणेति च । यथा शकटीं रत्नभारपूर्णां येन केनचित्स्नेहेनाक्षिलेपं कृत्वाऽभिलषितदेशान्तरं वणिगुपनयति तथा मुनिरपि गुणरत्नभरितां तनुशकटीमनवद्यभिक्षाऽऽयुरक्षम्रक्षणेना-भिप्रेतसमाधिपत्तनं प्रापयतीति 'अक्षम्रक्षण' मिति च नाम रूढं।

यथा भाण्डागारे समुत्थितमनलं शुचिनाऽशुचिना वा वारिणा प्रशमयति गृही तथा यथालब्धेन यतिरप्युदराग्निं सरसेन विरसेन वाऽऽहारेण प्रशमयतीत्युदराग्निप्रशमनमिति च निरुच्यते । दातृजनबाधया विना कुशलो मुनिर्भ्रमरवदाहरतीति भ्रमराहार इत्यपि परिभाष्यते । येन केनचित्स्वल्पगतेन श्वभ्रपूरणवदुदरगर्तमनगारः पूरयति स्वादुनेतरेण वेति श्वभ्रपूरणमिति च निगद्यते । प्रतिष्ठापनशुद्धिपरः संयतो नखरोमसिंघाणकनिष्ठीवनशुक्रोच्चारप्रस्रवणशोधने देहपरित्यागे च विदितदेशकालो जन्तूपरोधमन्तरेण यत्नं कुर्यात्प्रयतेन । संयतेन शयनासनशुद्धिपरेण स्त्रीक्षुद्रचौरपानाक्षशौण्डशाकुनिकादिपापजनावासा वर्ज्याः शृङ्गारविकारभूषणोज्ज्वलवेषवेश्याक्रीडाभिरामगीतनृत्तवादित्राकुलप्रदेशाः विकृताङ्गगुह्यदर्शनस्थानयात्रोत्सवमहायोपभोगमहोत्सववाहनदमनायुधव्यायामभूमयश्च रागकारणानीन्द्रियगोचराः मदमानशोककोपसंक्लेशस्थानादयश्च परिहर्तव्याः, अकृत्रिमा गिरिगुहातरुकोटरादयः कृत्रिमाश्च शून्यागारादयो मुक्तमोचितावासा अनात्मोद्देशनिर्वर्तिता निरारम्भाः सेव्याः । तत्र संयतस्य त्रिविधो निवासः, स्थानमासनं शयनं चेति । पादौ चतुरङ्गुलान्तरे प्रस्थाप्याऽचलितपूर्वाद्यन्यतममुखो भूत्वा यत्राऽऽत्मभावो यथाऽऽत्मबलवीर्यसदृशः कर्मक्षयप्रयोजनोऽसंक्लिष्टमतिस्तिष्ठेत्, अथ न शक्नुयात्तिष्ठितुं वज्रासनपर्यङ्कादिभिरासनैरासीत, यद्यपरिमितकालयोगः खिन्नो वैकपार्श्वबाहूपधानसवृन्तकादिभिरल्पकालं श्रमपरिहारार्थं शयीत । वाक्यशुद्धिः पृथिवीकायिकाद्यारम्भप्रेरणरहिता युद्धकामकर्कशाक्षेपपैशून्यपरुषनिष्ठुरादिपरपीडाकरप्रयोगनि

स्मृता । स्त्रीभक्तराष्ट्रावनिपालाऽऽश्रितकथाविमुखा व्रतशीलोपदाना-दिप्रदानफला स्वपरहितमितमधुरमनोहरा परमवैराग्यहेतुभूता परिहृतपरात्मनिन्दाप्रशंसा संयतस्य योग्या अभिधाना हि सर्वसंपद इति ।

इति शुद्धिप्रकरणम् ।

अथ संयमभेदाः साक्षान्मोक्षप्राप्तिकारणान्युच्यन्ते । सामायिकः छेदोपस्थापना, परिहारविशुद्धिः, सूक्ष्मसाम्परायः, यथाख्यात चारित्रमिति ।

तत्र सामायिकमवस्थानं सर्वसावद्ययोगस्याभेदेन प्रत्याख्यानमव-लम्ब्य प्रवृत्तमथवाऽवधृतकालमनवधृतकालं सामायिकमित्याख्यायते । त्रसस्थावरजन्तुदेशकालप्रादुर्भावनिरोधाप्रत्यक्षत्वात् प्रमादवशादभ्यु-पगतनिरवद्यक्रियाप्रबंधप्रलोपे सति तदुपात्तस्य कर्मणः सम्यक् प्रतिक्रिया छेदोपस्थापनाऽथवा सावद्यकर्मणो हिंसादिभेदेन विकल्पा निवृत्तिश्छेदोपस्थापना । प्राणिवधान्निवृत्तिः परिहारस्तेन विशुद्धिर्य-स्मिन्तत्परिहारविशुद्धिचारित्रम् तत्पुनस्त्रिंशद्वर्षभातस्य सवत्सरपृथ-क्त्वं तीर्थंकरपादमूलसेविनः प्रत्याख्याननामधेयपूर्वार्णवपारगतस्य जन्तुनिरोधप्रादुर्भावकालपरिणामजन्मयोनिदेशद्रव्यस्वभावविधानज्ञस्य प्रमादरहितस्य महावीर्यस्य परमनिर्जरस्यातिदुष्करचर्यानुष्ठायिनस्तिस्र सन्ध्या वर्जयित्वा द्विगव्यूतिगामिनः संपद्यते नान्यस्य । सूक्ष्मस्थूल-सत्त्ववधपरिहारप्रवृत्तत्वादनुपहतोत्साहस्याखण्डितक्रियाविशेषस्य स-म्यग्दर्शनज्ञानमहामारुतसंधुक्षितप्रशस्ताध्यवसायाग्निशिखोपश्लिष्टक-र्मेन्धनस्य ... ... ...नकषायविषाङ्कुरस्यापचयाभिमुखस्यो-

स्मोहबीजस्य तत एव परिप्राप्तान्वर्थसूक्ष्मसाम्परायशुद्धिसंयतस्य सूक्ष्मसाम्परायचारित्रम् । चारित्रमोहस्य निरवशेषस्योपशमात्क्षया- दात्मस्वभावावस्थापेक्षालक्षणमथाख्यातचारित्रं, अथ शब्दस्यानन्त र्यार्थवृत्तित्वान्निरवशेषमोहक्षयोपशमादनन्तरमाविर्भवतीत्यथाख्यात, अथवा यथाऽऽत्मस्वभावोऽवस्थितस्तथैवाऽऽख्यातत्वाद्यथाख्यातमिति ।

ततो यथाख्यातचारित्रात्सकलकर्मसमाप्तिर्भवति । सामायिकादी नामानुपूर्व्या वचनमुत्तरोत्तरगुणप्रकर्षख्यापनार्थम् । तद्यथा—सामा यिकच्छेदोपस्थापनासंयमस्य जघन्यविशुद्धिरल्पा ततः परिहारविशु- द्धिचारित्रस्य जघन्यलब्धिरनन्तगुणा तस्यैवोत्कृष्टाविशुद्धिरनन्त- गुणा ततः सामायिकच्छेदोपस्थापनासंयमोत्कृष्टविशुद्धिरनन्तगुणा ततः सूक्ष्मसाम्परायचारित्रस्य जघन्यविशुद्धिरनन्तगुणा तस्यैवोत्कृष्टा विशुद्धिरनन्तगुणा ततो यथाख्यातचारित्रविशुद्धिः सम्पूर्णा प्रकर्षा- प्रकर्षविरहिताऽनन्तगुणा । एवमेते पञ्च चारित्रोपयोगाः शब्द- विषयत्वेन सङ्ख्येयभेदाः । अध्यवसानभेदादसङ्ख्येया अर्थादनन्त- भेदाश्च भवन्ति । तदेतच्चारित्रं सर्वास्रवनिरोधकारणत्वात्परमसंवर- हेतुरित्यवसेयम् ।

अथ वा व्रतधारणसमितिपालनकषायनिग्रहदण्डत्यागेन्द्रियजय संयमः । तत्र हिंसाऽनृतस्तेयाऽब्रह्मपरिग्रहनिरतिरिति पञ्चधा व्रतम् । तत्रेन्द्रियकषायनिग्रहमकृत्वा प्रमत्त इव यः प्रवर्तते स प्रमत्तः । पञ्चेन्द्रियमनोवाक्कायबलोच्छ्वासनिःश्वासायुष्काणि प्राणाः । एकेन्द्रि- यादयः प्राणिनः प्रमत्तपरिणामयोगात्प्राणिप्राणव्यपरोपणं हिंसा । सा च संरम्भसमारम्भारम्भैस्त्रिभिः कायवाङ्मनःकर्मयोगैस्त्रिभिः कृत-

कारितानुमतैस्त्रिभिः क्रोधादिकषायैश्चतुर्भिर्भिद्यते । तत्र प्राणव्यपरोपणादिषु प्रमादतः प्रयत्नावेशः संरम्भः । साध्यायाः क्रियायाः साधनानां समाहारः समारम्भः । आदौ क्रमः प्रक्रम आरम्भ इति । औदारिकशरीरनामकर्मोदयवशात्पुद्गलैश्चीयत इति कायः । वाक् द्विविधा, भाववाक्, द्रव्यवागिति । तत्र भाववाग्वीर्यान्तरायमतिश्रुतज्ञानावरणक्षयोपशमाङ्गोपाङ्गनामलाभनिमित्तत्वात् पौद्गलिकी । तदभावे तद्वृत्त्यभावात्तत्सामर्थ्योपेतेन क्रियावताऽऽत्मना प्रेर्यमाणाः पुद्गला वाक्त्वेन विपरिणमन्त इति द्रव्यवागपि पौद्गलिकी । मनश्च द्विविधं, भावमनो द्रव्यमनश्चेति । तत्र भावमनो लब्ध्युपयोगाभ्यां लक्ष्यते पुद्गलावलम्बनत्वात्पौद्गलिकं । द्रव्यमनश्च ज्ञानावरणवीर्यान्तरायक्षयोपशमलाभप्रत्यया गुणदोषविचारस्मरणादिप्रणिधानाभिमुखस्यात्मनोऽनुग्राहकाः पुद्गला वीर्यविशेषावर्जनसमर्था मनस्त्वेन परिणता इति पौद्गलिकमिति । स्वातन्त्र्यविशिष्टेनात्मना यत् प्रादुर्भावितं तत्कृतं । परस्य प्रयोगमपेक्ष्य सिद्धिमापद्यमानं कारितं । प्रयोजकस्य मनसाऽभ्युपगमनमनुमतमिति । आत्मनः सम्यक्त्वसंयमासंयमसंयमयथाख्यातचारित्रं कषन्तीति कषायाः । अथ वा कृषन्ति फलवत्कुर्वन्ति कर्मबीजमिति कषायाः । संरम्भसमारम्भारम्भणामधस्तात् योगान् कृतकारितानुमतानि क्रोधमानमायालोभांश्च क्रमेण व्यवस्थाप्य संरम्भं निरुच्याक्षसंचारे कृते षट्त्रिंशद्विकल्पा भवन्ति । एवं समारम्भे आरम्भे च प्रत्येकं षट्त्रिंशद्विकल्पा भवन्ति । सर्वे संपिंडिता अष्टोत्तरशतसंख्याका भवन्ति ।

एवं कायादियोगान्कृतकारितानुमतानि क्रोधादिकषायांश्चैकैकं निरुच्याक्षसंचारः कर्तव्यः ।

संख्यातासंख्यातानन्तभवसमारावस्थानमनन्तानुबन्धिना कषाया-णां । षण्मासान्तस्थानमप्रत्याख्यानानां । पक्षान्तस्थानं प्रत्याख्याना-नानां । अन्तर्मुहूर्तान्तस्थानं संज्वलनानां । एवंविधषोडशकषायभेदात् द्वात्रिंशदुत्तरचतुःशतविकल्पा भवन्ति ।

अप्रतिपीड्या सूक्ष्मजीवा, बादरजीवानां गत्यादिमार्गणागुणस्थानकुलयोन्यायुष्यादिकं ज्ञात्वा गमनस्थानशयनासनादिषु स्वयं न हननं, परैर्वा न घातनं, अन्येषामपि हिंसतां नानुमोदनं हिंसाविरतिः । अहिंसाव्रतं स्वर्गापवर्गफलप्रापणहेतुस्तत्प्रतिपालननिमित्तं शेषाणि व्रतानि । अहिंसकः पुरुषो निजजनस्वाद्विश्वास्य पूज्यश्च भवति । हिंस्रो हि नित्योद्वेजनीयः सततोऽनुबद्धवैरश्चेहैव च वधबन्धपरिक्लेशादीन् परिलभते प्रेत्य चाशुभां गतिं, गर्हितश्च भवतीति हिंसाया व्युपरमः श्रेयान् । परमार्थग्रहणेच्छयाऽहिंसाव्रतस्थैर्यार्थं पञ्च भावना भवन्ति ।

वाग्गुप्तिः, मनोगुप्तिः, ईर्यासमितिः, आदाननिक्षेपणासमितिः, आलोकितपानभोजनमिति ।

पारमार्थिकस्य भूतनिह्नवेऽभूतोद्भावने च यदभिधानं तदेवानृतं स्यात् । भूतनिह्नवे नास्त्यात्मा नास्ति परलोक इत्यादि । अभूतोद्भावने च श्यामाकतण्डुलमात्रे आङ्गुष्ठपर्वमात्रः सर्वगतो निष्क्रिय इत्यादि । यद्विद्यमानार्थं विषयं प्राणिपीडाकारणं तत्सत्यमप्यसत्यं

१ ख पुस्तके " परमार्थिकस्य ' इति पाठो नास्ति । २ तण्डुलसंज्ञो विशेषः । ३ प्रमाणे ' द्वयसज्दघ्नञ्मात्रचः ' इत्यनेन पाणिनिसूत्रेण प्रमाणार्थे मात्रच् प्रत्ययः ।

मेतद्विपरीत यच्च प्राणिपीडाकर तदनृत कृतात्कारितादनुमोदिताद्वा ऽनृताद्विरति सत्यव्रत तदभ्युदयनि श्रेयसकारण । सत्यवादिन तदभ्युदयनि श्रेयसकारण । सत्यवादिन सन्मानयति लोक , सर्वेषु कार्येषु प्रमाण भवति, अनृतवाद्यश्रद्धेयो भवति, इहैव जिह्वाच्छेदनादीन् प्रतिलभते, मिथ्याभ्याख्यानदु खितेभ्यश्च बद्धवैरेभ्यो बहूनि व्यसनान्यवाप्नोति प्रेत्य चाऽशुभा गतिं । निन्दितश्च भवती त्यनृतवचनादुपरम श्रेयान् । सत्यव्रतदृढीकरणार्थं पच भावना भवति ।

क्रोधप्रत्याख्यान, लोभप्रत्याख्यान, भीरुत्वप्रत्याख्यान, हास्यप्रत्याख्यान, अनुवीचीभाषण चेति । अनुवीचीभाषणमनुलोमभाषणमित्यर्थ , विचार्य भाषणमनुवीचीभाषणम् ।

अदत्ताऽऽदान स्तेय । ग्रामारामशून्यागारवीथ्यादिषु निपतितमणिरत्नकवस्त्रादिवस्तुनो ग्रहणमदत्तादान । कृतकारितान्निमित्तस्माद्विरतिरस्तेयव्रतम् । तद्वीर्वाणनिर्वाणप्रद । अस्तेयव्रतिनो बहिश्चरप्राणेष्वर्थेष्वपि विश्वसिति लोक । परद्रव्यहरणासक्तमति सर्वेभ्यो द्वेजनीयो भवति, इहैव चाभिघातवधबन्धहस्तपादकर्णनासोत्तरौष्ठच्छेदनभेदनशूलारोहणकरचर्मपाटनकारागारविनिवेशनसर्वस्वहरणादीन्प्रतिलभते प्रेत्य चाशुभा गतिं । कुत्सितश्च भवति, तत्संसर्गेत शिष्टोऽपि संशयमवाप्नोति । अदत्तादानव्रतस्थिरीकरणार्थं भावना पञ्च भवति ।

---

१ " अदत्त इत्येतयोरुपसर्गवदवृत्तिर्विवक्ष्या " अत्र डुधाञ् धातु , अप्रत्येय इत्यर्थ । २ पंचत्वं प्राप्य । ३ अस्त्रविशेष ।

शून्यागारगिरिगुहातरुकोटरादिष्वावासः, परकीयेषु मोचितेष्वावासः, परेषां मनुष्यान्तरादीनामुपरोधाकरणं, आचारसूत्रमार्गेण भैक्ष्यशुद्धिः, ममेदं तवेदमिति ब्रह्मणो विसंवादः, न विसंवादोऽविसंवादः, सधर्मभिरविसंवाद इति ।

मैथुनमब्रह्म, स्त्रीपुंसोर्वेदोदये वेदनापीडितयोर्यत्कर्म तन्मैथुनमथ वैकल्याऽपि चारित्रमोहोदयोद्रिक्तरागस्य हस्तादिसंघट्टनेऽपि मैथुनमिति । अहिंसादिगुणबृंहणाद्ब्रह्म न ब्रह्म अब्रह्म तिर्यङ्मनुष्य देवाऽचेतनभेदाच्चतुर्विधस्त्रीभ्यो मातृसुताभगिनीभावनया मनोवाक्काय-प्रत्येककृतकारितानुमोदितभेदेन नवविधाद्विरतिश्चतुर्थव्रतं । तदेव स्वर्गमोक्षसाधनं, ब्रह्मचारिणं भूमिस्थमपि साक्षाद्देव इव मन्यते लोकः । अभयतोऽपि बहूनां मानार्हो भवति, तस्मिन् प्रतिष्ठिताः सर्वे गुणाः, विद्यान्विताश्च परिगृहीतब्रह्मव्रतस्य किंकरभावमुपयान्ति । अब्रह्मचारी मदविभ्रमोन्मथितचित्तो वनगज इव वासितोवञ्चितो विवशो वधबन्धपरिक्लेशादीननुभवति, मोहाभिभूतत्वाच्च कार्याकार्यानभिज्ञो न किंचित्कुशलमाचरति, पराङ्गनालिङ्गनसङ्गकृतरतिश्चेहैव वैरानुबन्धिनो लिङ्गच्छेदनवधबन्धसर्वस्वहरणादीनपायान् प्राप्नोति, प्रेत्य चाशुभां गतिमश्नुते, तृणवल्लघुश्च भवतीत्यतः स्त्रीनिरतिरात्महिता । ब्रह्मचर्यव्रतनिश्चलीकरणार्थं पञ्च भावना भवन्ति ।

स्त्रीरागकथाश्रवणवर्जनं, तन्मनोहराङ्गनिरीक्षणविरहः, पूर्वरतानुस्मरणपरिहारः, वृष्येष्टरसानुभवनविरामः, स्वशरीरसंस्कारत्यागश्चेति ।

१ घनकीर्णो । २ दुःखानि । ३ लभते ।

मूर्च्छा परिग्रह, बाह्याभ्यन्तरोपधिसंरक्षणादिव्यावृत्तिर्मूर्च्छा । क्षेत्रवास्तुधनधान्यद्विपदचतुष्पदयानशयनासनकुप्यभाण्डानि दशविधश्चेतनाचेतनभेदलक्षणो बाह्यपरिग्रह । मिथ्यात्वक्रोधमानमायालोभहास्यरत्यरतिशोकभयजुगुप्सावेदरागद्वेषचतुर्दशभेदोऽभ्यन्तरपरिग्रह । एतस्मान्मनस कृतकारितानुमोदितेन वचस कृतकारितानुमोदितेन कायस्य कृतकारितानुमोदितेन च विरतिरपरिग्रहलक्षणं व्रतम् । तदेव स्वर्गमोक्षस्साधन सर्वेषा गुणानामलङ्करण, निष्परिग्रहव्रतिन सर्वेऽपि सन्मानयन्ति, स सर्वश्च समभिवन्दनीय सपूजनीयश्च भवति, तस्य नामग्रहणेऽपि बद्धाञ्जलिर्भवति लोक । परिग्रहवान् यथा शकुनिर्गृहीतमांसखण्डोऽन्येषा तदर्थिना पतत्रिणामभिभवनीयं, तथा तस्करादीनामभिभवनीयो मार्यश्च भवति, परिग्रहार्जननिमित्त निजाभिजनोचितवृत्त विहाय केचन जडधियो नीचतामुपगच्छन्ति, न चाऽस्य तृप्तिर्भवतीन्धनैरिवाऽग्नेर्लोभाभिभूतत्वाच्च कार्याकार्यानपेक्षो भवति, प्रेत्य चाशुभा गतिमास्कन्दति, लुब्धोऽयमिति गर्हितश्च भवतीति नीचवृत्त्या समुपार्जनीयमनित्य दु खकारण परिग्रह परित्यज्याकिंचन्यवृत्त्या नित्यमनन्तसुखसाधन मोक्षमार्गमुपार्जयन्त्यात्महितैषिण । आकिंचन्यव्रतद्रढिमार्थं पञ्च भावना भवति ।

पञ्चाना स्पर्शनरसनघ्राणचक्षु श्रोत्राणामिष्टेषु विषयेषूपनिपतितेषु रागवर्जनमनिष्टेषु विषयेषूपनिपतितेषु द्वेषवर्जनमिति ।

---

१ पक्षी । २ निराकरणीय । ३ कुल । ४ मूर्खा । ५ " द्रढिमा " इत्यत्र " इमनिच् " प्रत्यय ।

एवमहिंसाव्रतानां लक्षणं फलं गुणं तदभावे दोषभावनां च ज्ञात्वा यथा ममाप्रियं वधबन्धपरिपीडनं तथा सर्वसत्त्वानां । यथा मम मिथ्याख्यानकटुकपरुषादीनि वचांसि शृण्वतोऽतितीव्रं दुःखमभूतपूर्वमुत्पद्यते तथा सर्वजीवानां । यथा ममेष्टद्रव्यवियोगे व्यसनपूर्वमुपजायते तथा सर्वभूतानां । यथा मम कान्ताजनपरिभवे परकृते सति मानसी पीडाऽतितीव्रा जायते तथा सर्वप्राणिनां । यथा च मम परिग्रहेष्वप्राप्तेषु काङ्क्षोद्भवं प्राप्तेषु रक्षाजनितं विनष्टेषु शोकसमुत्थं दुःखमतितीव्रतरं भवति तथा च सर्वदेहिनाम् । अतो न हिनस्मि । नानृतं वदामि । नादत्तमाददे । नाङ्गनां स्पृशामि । न परिग्रहमुपाददे इत्येवं प्रमत्तपरिणामयोगजनितं हिंसादिकं विहायाप्रमत्तपरिणामादहिंसादिव्रतधारणे यत्नः कर्त्तव्यः ।

समितिपालनं पूर्वमुक्तं । चतुर्विधकषायनिग्रहश्चोत्तमक्षमामा[1]र्दवार्जवसत्यशौचेषु प्रतिपादितः ।

दण्डस्त्रिविधः, मनोवाक्कायभेदेन । तत्र रागद्वेषमोहविकल्पात्मा मानसो दण्डस्त्रिविधः, तत्र रागः प्रेमहास्यरतिमायालोभाः । द्वेषः क्रोधमानारतिशोकभयजुगुप्साः । मोहो मिथ्यात्वनिर्वेदसहिताः प्रेमहास्यादयः । अनृतोपघातपैशून्यपरुषाभिशंसनपरितापहिंसनभेदाद्वाग्दण्डः सप्तविधः । प्राणिवधचौर्यमैथुनपरिग्रहाऽऽरम्भताडनोग्रवेषविरचनात्कायदण्डोऽपि च सप्तविधः । गुप्तात्मना प्रयतमानेन दण्डत्यागो विधेयः ।

विषयाटवीषु स्वच्छन्दप्रधावमानेन्द्रियगजानां ज्ञानवैराग्योपवा-

१ रोधादिकोऽयं चातु

साद्यनुशाकर्पणेन वशीकरणमिन्द्रियजय । स चान्त्रवानुप्रेक्षाया वक्ष्यते ।

संयमो ह्यात्महितस्तमनुतिष्ठन्निहैव पूज्यते। परत्र किमत्र वाच्य। असयत प्राणिवधविषयमार्गेषु नित्य प्रवृत्तो मूर्तिमदशुभकर्मैवाय-मिति साधुजनविनिंद्यमानो दुष्कर्म्म सचिनुते।

संयमिनो नैर्ग्रन्थ्यधारिण पचविधा । पुलाका, बकुशा, कुशील, निर्ग्रन्था, स्नातकाश्चेति । तत्रोत्तरगुणभावनोपेतमनस व्रतेष्वपि क्वचित्कदाचित्परिपूर्णतामपरिप्राप्नुवन्तोऽविशुद्धपुलाकसादृश्यात्पुलाका इत्युच्यन्ते । नैर्ग्रन्थ्यमुपस्थिता अखडितव्रता शरीरोपकरणविभूषणानुवर्तिनो वृद्धियश कामा सातगौरवाश्रिता अविविक्त-परदाराश्च (?) छेदशबलयुक्ता बकुशा । शबलपर्यायवाची बकुश-शब्द इति । कुशीला द्विविधा, प्रतिसेवनाकुशीला, कषायकुशीला-श्चेति। तत्राविविक्तपरिग्रहा (?) परिपूर्णमूलोत्तरगुणा कथचिदुत्तरगुण-विरोधिन प्रतिसेवनाकुशीला, ग्रीष्मे जघाप्रक्षालनादिसेवनवदिति । वशीकृतान्यकषायोदया सज्वलनमात्रतन्त्रा कषायकुशीला इति । यथोदके दडराजिराश्वेव निलयमुपयाति तथाऽनभिव्यक्तोदयकर्माण ऊर्ध्वं मुहूर्त्तादुद्भिद्यमानकेवलज्ञानदर्शनभाजो निर्ग्रन्था इति । ज्ञाना-वरणादिघातिकर्मक्षयादाविर्भूतकेवलज्ञानाद्यतिशयविभूतय सयोगि शैलेशिनो नवल(?)यासदा केवलिन स्नातका इति । एते प्रकृष्टा-प्रकृष्टमध्यमचारित्रभेदे सत्यपि नैगमनयापेक्षया पचापि निर्ग्रन्था इत्युच्यन्ते । यथा षोडशत्रयोदशदशवर्णिकादिषु सुवर्णशब्दोऽवि-शिष्टो वर्तते तथा निर्ग्रन्थशब्दोऽपि । सम्यग्दर्शन निर्ग्रन्थरूप च

भूतावेप्युपगृहीत नत्सामान्ययोगात्सर्वेषु पुलाकादिषु निर्ग्रन्थ शब्दो युक्त ।

पुलाकादिनिर्ग्रन्था उत्तरोत्तरगुणप्रकर्षवृत्तिविशेषा सयमादि भिरष्टाभिरनुयोगैर्व्याख्येया । तद्यथा—सयम , श्रुत, प्रतिसेवना, तीर्थ, लिंग, लेश्या, उपपाद , स्थानमिति विकल्पत पुलाकाद्य साध्या । तत्र सयमे पुलाकबकुशप्रतिसेवनाकुशीला द्वयो सयमयो सामायिकच्छेदोपस्थापनयोर्भवन्ति । कषायकुशीला सामायिकच्छेदोपस्थापनयो परिहारविशुद्धिसूक्ष्मसापराययोश्च भवन्ति । निर्ग्रन्था स्नातकाश्चैकस्मिन्नेव यथाख्यातसयमे भव न्तीति । श्रुते पुलाकबकुशप्रतिसेवनाकुशीला उत्कर्षेणाभिन्नाक्षर दशपूर्वधरा कषायकुशीला निर्ग्रन्थाश्चतुर्दशपूर्वधरा । जघन्येन पुलाकस्य श्रुतमाचारवस्तु, बकुशकुशीलनिर्ग्रन्थाना श्रुतमष्टौ प्रवचन मातर । स्नातका अपगतश्रुता केवलिन । प्रतिसेवनाया पचाना मूलगुणाना रात्रिभोजनवर्जनस्य च पराभियोगाद्बलादन्यतम प्रति सेवमान पुलाको भवति । बकुशो द्विविध , उपकरणबकुश , शरीरबकुशश्चेति । तत्रोपकरणाभिष्वक्तचित्तो विविधविचित्रपरि ग्रहयुक्तो बहुविशेषोपयुक्तोऽपकरणाकाक्षी तत्सस्कारप्रतीकारसेवी भिक्षुरुपकरणबकुशो भवति । शरीर सस्कारसेवी शरीर-बकुश । प्रतिसेवनाकुशीलो मूलगुणानविराधयन्नुत्तरगुणेषु काचि द्विराधना प्रतिसेवते । कषायकुशीलनिर्ग्रन्थस्नातकाना प्रतिसेवना नास्ति । तीर्थ सर्वेषा तीर्थकराणा तीर्थेषु भवन्ति । लिंगे, द्रव्य भावभेदाल्लिंग द्विविध, भावलिंग प्रतीत्य सर्वे पचाऽपि निर्ग्रन्था

लिंगिनो भवन्ति, द्रव्यलिंग प्रतीत्य भाज्याः । लेश्यायाः पुलाकस्योत्तरास्तिस्रो लेश्या भवन्ति । वकुशप्रतिसेवनाकुशीलयो षडपि, कषायकुशीलस्य परिहारविशुद्धस्य चतस्र उत्तरा, सूक्ष्मसाम्परायस्य निर्ग्रन्थस्नातकयोश्च शुक्लैव केवला भवति, अयोगिन शैलेशिता प्रतिपन्ना अलेश्या । उपपाते, पुलाकस्योत्कृष्ट उपपातोऽष्टादशसागरोपमोत्कृष्टस्थितिषु देवेषु सहस्रारे, वकुशप्रतिसेवनाकुशीलयोर्द्वाविंशतिसागरोपमस्थितिष्वारणाच्युतकल्पयो, कषायकुशीलनिर्ग्रन्थयोस्त्रयस्त्रिंशत्सागरोपमस्थितिषु सर्वार्थसिद्धौ च सर्वेषामपि जघन्य सौधर्मकल्पे द्विसागरोपमस्थितिषु स्नातकस्य निर्वाणमिति । स्थानेऽसख्येयानि सयमस्थानानि कषायनिमित्तानि भवन्ति । तत्र सर्वजघन्यानि लब्धिस्थानानि पुलाककषायकुशीलयोस्तौ युगपदसख्येयानि स्थानानि गच्छत, तत पुलाको व्युच्छिद्यते । कषायकुशीलस्ततोऽसख्येयानि गच्छत्येकाकी । तत कषायकुशीलप्रतिसेवनाकुशीलवकुशा युगपदसख्येयानि स्थानानि गच्छन्ति, ततो वकुशो व्युच्छिद्यते, ततोऽप्यसख्येयानि स्थानानि गत्वा प्रतिसेवनाकुशीलो व्युच्छिद्यते, ततोऽप्यसख्येयानि स्थानानि गत्वा कषायकुशीलो व्युच्छिद्यते, अत ऊर्ध्वमकषायस्थानानि निर्ग्रन्थ प्रतिपद्यते, सोऽसख्येयानि स्थानानि गत्वा व्युच्छिद्यते, अत ऊर्ध्वमेकस्थान गत्वा स्नातको निर्वाण प्राप्नोति त्येषा सयमलब्धिरनन्तगुणा भवतीति ।

अथ परीषहजयप्रकरण प्रस्तौति ।

सयतेन तपस्विना दर्शनचारित्ररक्षणार्थं परिषोढव्या परीषहा ।

उक्तं हि—

परिषोढव्या नित्यं दर्शनचारित्ररक्षणे नियते ।
संयमतपोविशेषास्तदेकदेशाः परीषहाख्याः स्युः ॥

इत्युक्तत्वात्संयमतपसोर्मध्ये परीषहा उच्यन्ते । कर्मागमद्वाराणि संवृण्वतो जैनेन्द्रान्मार्गान्मा च्योष्महीति पूर्वमेव परीषहाञ्जयन्तो जितपरीषहाः सद्भिस्तैरनभिभूयमाना प्रधानसंवरमाश्रित्याप्रतिबन्धेन क्षपकश्रेण्यारोहणसामर्थ्यं प्रतिपद्यन्ते । अभिन्नोत्साहाः सकलसांपरायिकप्रशमनशक्तयो ज्ञानध्यानपरशुच्छिन्नमूलानि कर्माणि विधूय प्रस्फोटितपक्षरेणव इव पतत्त्रिण ऊर्ध्वं व्रजन्तीत्येवमर्थं परिषोढव्याः परीषहाः ।

क्षुत्पिपासाशीतोष्णदंशमशकनाग्न्यारतिस्त्रीचर्यानिषद्याशय्याऽऽक्रोशवधयाचनाऽलाभरोगतृणस्पर्शमलसत्कारपुरस्कारप्रज्ञाऽज्ञानादर्शनानीति क्षुधादयो द्वाविंशतिपरीषहाः । त एते बाह्याभ्यन्तरद्रव्यपरिणामाः शारीरमानसप्रकृष्टपीडाहेतवस्तद्विजये निपुणा संयतेन तपस्विना मोक्षार्थिना प्रयत्नः कार्यः । तद्यथा—निवृत्तसंस्कारविशेषस्य शरीरमात्रोपकरणमन्तुष्टस्य तपःसंयमविलोपं परिहरतः कृतकारितानुमतसंकल्पितोद्दिष्टसंक्लिष्टक्रयागतप्रत्याख्यातपूर्वकर्मपश्चात्कर्मदृष्टादिदोषविप्रमुक्तैषणस्य देशकालजनपदव्यवस्थापेक्षस्यानशनाव्याधिरोगतपःस्वाध्यायश्रमवेलातिक्रमावमौदर्यासद्वेद्योदयादिभ्यो नानाऽऽहारेन्धनोपरमे जठराग्निदाहिनीमारुतालोलिताऽग्निशिखेव समन्ताच्छरीरेन्द्रियहृदयसंक्षोभकरी क्षुदुत्पद्यते । तस्याः प्रतीकारं निष्प्रकारं काले संयमविरोधिभिर्द्रव्यैः स्वयमकुर्वतोऽन्येन क्रियमाणमसेव

ग्लानस्य मनसा वाऽनभिसंदधतो दुस्तरेयं वेदना महान् कालो दीर्घसह इति विषादमनापद्यमानस्य त्वगस्थिसिरावितानमात्रदेहस्यापि सतः आवश्यकक्रियादिषु नित्योद्यतस्य क्षुद्ग्रासप्राशनयोग्या-रकत्वचरस्थमनुष्यपञ्चरगततिर्यक्प्राणिनः क्षुदभ्यर्दितान्परतन्त्रानपेक्षमाणस्य ज्ञानिनो धृत्यम्भसा शमकुम्भधारितेन क्षुदग्निं शमयतस्तत्कृतपीडाप्रत्यविगणनं क्षुज्जय इत्युच्यते ।

जलस्नानावगाहनपरिषेकत्यागिनः पतत्रिवदध्रुवासनावसथस्यातिलवणस्निग्धरूक्षविरुद्धाहारग्रैष्मातपपित्तज्वरानशनादिभिरुदीर्णां शरीरेन्द्रियोन्माथिनीं पिपासां प्रत्यनाद्रियमाणप्रतीकारमनसो निदाघे पटुतपनकिरणसंतापिनोष्णाटव्यामासन्नेष्वपि ह्रदेष्वप्कायिकजीवपरिहारेच्छया जलमनाददानस्य सलिलसेकविनेऽम्लानां लतामिव ग्लानिमुपगतां गात्रयष्टिमवगणय्य तपःपरिपालनपरस्य भिक्षाकालेऽपीङ्गिताकारादिभिर्योग्यमपि पानं पातुं परमचोदयतः परमधैर्यकुम्भधारितशीतलसुगन्धिप्रतिज्ञातोयेन निर्वापयतस्तृष्णाग्निशिखां संयमपरस्य पिपासासहनमित्यवसीयते ।

परित्यक्तवाससः पक्षिवदनवधारितालयस्य शरीरमात्राधिकरणस्य शिशिरवसन्तजलदागमादिकालवशाद्वृक्षमूले पथि गुहादिषु पतितप्रालेयतुषारलवव्यतिकरशिशिरपवनाभ्याहतमूर्तेस्तत्प्रतिक्रियासमर्थद्रव्यान्तराभ्याधानाभिसंधानाद्दारुदुःसहशीतवेदनाऽनुस्मरणात् तत्प्रतिचिकीर्षया परमार्थविलोपभयाद्विद्यामन्त्रौषधपर्णवल्कलत्वक्तृणाजिनादिसंचयात् व्यावृत्तमनसः परकीयमिव देहं मन्यमानस्य धृतिविशेषप्रावरणस्य गर्भागारेषु धूपप्रकरपुष्पप्रकरप्रज्वलितप्रदीपप्रभेषु

वराङ्गनानवयौवनोष्णघनस्तननितम्बभुजान्तरवर्जितशीतेषु निवास । रतसुखाकरमनुभूतमसारत्वावबोधादस्मरतो विषादविरहितस्य संयमपरिपालनं शीतक्षमेति भाष्यते ।

ग्रैष्म्येण पटीयसा भास्करकिरणसमूहेन सन्तापितशरीरस्य तृष्णानशनपित्तरोगघर्मश्रमप्रादुर्भूतौष्ण्यस्य स्वेदशोषदाहाऽभ्यर्दितस्य जलमज्जनजलावगाहनानुलेपपरिषेकार्द्रावनितलोत्पलदलकदलीपत्रोत्क्षेपमारुतजलकणिकाचन्दनद्रवचन्द्रपादकमलकह्लारमुक्ताहारादिपूर्वानुभूतशीतलद्रव्यप्रार्थनाऽपेतचेतस उष्णवेदनातितीव्रा महत्कृच्छ्रपरवशादवाप्ता इदं पुनस्तपो मम कर्मक्षयकारणमिति तद्विरोधिनीं क्रियां प्रत्यनादरादावारितरक्षणमुष्णसहनमिति समाम्नायते ।

प्रत्याख्यातशरीराच्छादनस्य क्वचिदप्रतिबद्धचेतसः परकृतायतनगुहागह्वरादिषु रात्रौ दिवा वा दंशमशकमक्षिकापिशुकपुत्तिकामत्कुणकीटपिपीलिकावृश्चिकादिभिस्तीक्ष्णपातैर्भक्ष्यमाणस्यातितीव्रवेदनोत्पादेऽप्यव्यथितमनसः स्वकर्मविपाकमनुचिन्तयतो विद्यामन्त्रौषधादिभिस्तन्निवृत्तिं प्रति निरुत्सुकस्याऽऽशरीरपतनादपि निश्चितात्मनः परबलप्रमर्दनं प्रति वर्तमानस्य मत्तगन्धहस्तिपुरस्य रिपुजनप्रेरितविविधशस्त्रप्रतिघातादपराङ्मुखस्य निष्प्रत्यूहविजयोपक्रमणमिव कर्मारातिपृतनापराभवं प्रति प्रयतनं दंशमशकादिबाधासहनमप्रतीकारमित्याख्यायते । दंशमशकमात्रग्रहणमुपलक्षणार्थं, तेन दंशमशकादिपरितापकारणस्य सर्वस्यैवेदमुपलक्षणं, यथा काकेभ्यो दधि रक्ष्यतामिति[1] ।

---

१ अत्र लक्षणया काकशब्दस्य दध्युपघातकोऽर्थः, "मुख्यार्थबाधे तद्योगे रूढितोऽथ प्रयोजनात् । अन्योऽर्थो लक्ष्यते यत्सा लक्षणारोपिता क्रिया" इति लक्षणालक्षणं काव्यप्रकाशग्रन्थे ।

गुप्तिसमित्यविरोधिपरिग्रहनिवृत्तिपरिपूर्णब्रह्मचर्यमप्रार्थित-
मोक्षसाधन चारित्रानुष्ठान यथाजातरूपमसंस्कृतमविकार मिथ्या-
दर्शनाविष्टविद्विष्ट परममांगल्य नाग्न्यमभ्युपगतस्य स्त्रीरूपाणि नित्या-
शुचिबीभत्सकुणपभावेन पश्यतो वैराग्यभावनावरुद्धमनोविक्रियस्या-
संभावितमनुष्यत्वस्य नाग्न्यदोषासंस्पर्शात्परीषहजयसिद्धिरिति
जातरूपधारणमुत्तमश्रेयःप्राप्तिकारणमित्युच्यते । इतरे पुनर्मनो-
विक्रिया निरोद्धुमसमर्थास्तत्पूर्विकामङ्गविकृतिं निगूहितुकामाः
कौपीनफलकचीवराद्यावरणमातिष्ठन्तेऽङ्गसंवरणार्थमेव, तन्न कर्म-
संवरणकारणम् ।

संयतस्य क्षुधाद्याऽऽबाधासंयमपरिरक्षणेन्द्रियदुर्जयत्वव्रतपरिपा-
लनभारगौरवसर्वदाऽप्रमत्तत्वदेशभाषान्तरानभिज्ञत्वविषमचपलसत्त्व-
प्रचुरभीमदुर्गनियतैकविहारत्वादिभिररतिं प्रादुष्यन्तीं (?) धृतिविशेषा-
न्निवारयतः संयमे रतिभावनाद्विषयसुखरतिमाविषमाहारसेवेव
विपाककटुकेति चिन्तयतोऽरतिपरीषहबाधाऽभावादरतिपरीषहजय
इति निश्चीयते ।

एकान्ते भवनारामादिप्रदेशे रागद्वेषयौवनदर्परूपमदविभ्रमोन्मा-
दमद्यपानाऽऽवेशादिभिः प्रमदासु बाधमानासु तद्भ्रूक्षिवक्त्रभ्रूविकार-
शृंगाराकारविहारहावभावहासलीलाविजृम्भितकटाक्षविक्षेपसुकुमार-
स्निग्धमृदुपीनोन्नतस्तनकलशानितान्तताम्राधरपृथुजघनरूपगुणाभरण-
गन्धवस्त्रमाल्यादीन्प्रत्यनगृहीतमनोवृत्तेर्दर्शनाभिलापनिरुत्सुकस्य
स्निग्धमृदुविशदसुकुमाराभिधानतन्त्रीवंशमिश्रमधुरगीतश्रवणानिवृत्ता-

दरश्रोतस्य कूर्मवत्संवृतेन्द्रियहृदयविकारस्य ललितस्मितमृदुकथित-सविकारवीक्षणप्रहसनमदमन्थरगमनमन्मथशरव्यापारविफलीकरण चरणस्य संसारार्णवव्यसनपातालरौद्रदु खागाधाऽऽवर्त्तकुटिलाध्यायिन स्त्रैणानर्थनिवृत्ति स्त्रीपरीषहजय इति कथ्यते। अन्यवादि परिकल्पिता देवताविशेषा ब्रह्मादयस्तिलोत्तमादिदेवगणिकारूपसंप-दर्शनलोललोचनविकारा स्त्रीपरीषहपङ्काशेद्धर्तुमात्मान समर्था।

दीर्घकालाऽभ्यस्तगुरुकुलब्रह्मचर्यस्याधिगतबन्धमोक्षपदार्थतत्त्वस्य कषायनिग्रहपरस्य भावनार्पितमनस संयमायतनादिभक्तिहेतोर्देशा-न्तरातिथेर्गुरुणाऽभ्यनुज्ञातस्य नानाजनपदव्याहारव्यवहाराभिज्ञस्य ग्राम एकरात्र नगरे पञ्चरात्र प्रकर्षेणावस्थातव्यमित्येव यातस्य वायोरिव नि सङ्गतामुपगतस्य देशकालप्रमाणोपेतमध्वगमनमनुभवत क्लेशाश्रमस्य भीमाटवीप्रदेशेषु निर्भयत्वात्सिंहस्येव सहायकृत्यमन-पेक्षमाणस्य परुषशर्कराकण्टकादिव्यथनजातपादखेदस्यापि सत पूर्वोचितयानवाहनादिगमनमस्मरत सम्यक् चर्यादोष परिहरत चर्यापरीषहजयो वेदितव्य।

श्मशानोद्यानशून्यायतनगिरिगुहागह्वरादिष्वनभ्यस्तपूर्वेषु निर्दि-ष्टसंयमनियमस्य धैर्यसहायस्योत्साहवतो निषद्यामधिरूढस्य प्रादुर्भू-तोपसर्गोग्ररोगविकारस्यापि सतस्तत्प्रतिदेशाद्विचलतो मन्त्रविद्यादि-रक्षणप्रतीकारानपेक्षमाणस्य क्षुद्रजन्तुप्रायविषमदेशाश्रयात्क्वाचोपल-निश्चलस्यानुभूतमृदुसंस्तरणादिस्पर्शसुखमवगणयत प्राणिपीडापरि-हारोद्यतस्य ज्ञानध्यानभावनाधीनचित्तस्य सङ्कल्पितवीरासनोत्कुटिका-सनादिरितरासनयोपजयान्निषद्याविजितिरित्याख्यायते।

स्वाध्यायध्यानाध्वश्रमपरिखेदितस्य खरविषमप्रचुरशर्कराकपाल-संकटातिशीतोष्णेषु भूमिप्रदेशेषु मौहूर्त्तिकीं निद्रामनुभवतो यथाऽऽकृतैकपार्श्वदण्डायतादिशायिनः संजातबाधाविशेषस्य संयमार्थमस्पन्दमानस्यानुतिष्ठतो व्यन्तरादिभिर्वा वित्रास्यमानस्य पलायनं प्रति निरुत्सुकस्य मरणभयानिर्विशङ्कस्य निपतितदारुवत् व्यपगतासुवच्च परिवर्त्तमानस्य द्वीपिशार्दूलमहोरगादिदुष्टसत्त्वपरिचरितोऽयं प्रदेशोऽचिरादतो निर्गमनं श्रेयः कदा नु रात्रिर्विरमतीति विषादमनाददानस्य सुखप्राप्तावप्यपरितुष्यतः पूर्वानुभूतनवनीतवन्मृदुशयनमननुस्मरतः सम्यगागमोदितशयनादप्रच्यवतः शय्यासहनमिति तत्प्रत्येतव्यम् ।

तीव्रमोहाऽऽविष्टमिथ्यादृष्ट्यनार्यम्लेच्छखलपापाचारमत्तोद्धतशङ्कितप्रयुक्त 'मा' शब्दपरपावज्ञानाक्रोशादीन्कर्णमूले गतान् हृदयशूलोद्भावकान् क्रोधज्वलनशिखाप्रवर्द्धनकरानभिप्रायान् शृण्वतोऽपि दृढमनसो दुर्मर्षिणो भस्मसात्कर्त्तुमपि समर्थस्य परमार्थावहितचेतसः शब्दमात्रश्राविणस्तदर्थान्वीक्षणविनिवृत्तव्यापारस्य स्वकृताशुभकर्मोदयो ममैष यतोऽमीषां मां प्रति द्वेष इत्येवमादिभिरुपायैरनिष्टवचनसहनमाक्रोशपरीषहजय इति निर्णीयते ।

ग्रामोद्याननगराटवीपुरेषु नक्तं दिवा चैकाकिनो निरावरणमूर्त्तेः समन्तात्पर्यटद्भिश्चौरारक्षकम्लेच्छचारपुरुषबधिरपूर्वापकारिद्विषत्पर-लिङ्गिभिराहितक्रोधैस्ताडनाकर्षणबन्धनशस्त्राभिघातादिभिर्मार्यमाणस्यानुत्पन्नवैरस्यानस्य प्रपातुकमेवेदं शरीरं कुशलद्वारेणानेनापनीयते न मम व्रतशीलभावनामृशानमिति भावशुद्धस्य दह्यमानस्यापि सत

सुगन्धमुत्सृजतश्चन्दनस्येव शुभपरिणामस्य स्वकर्मनिर्जरामभिसंदधानस्य क्षमते क्षमोपविष्टस्य मार्गेषु मुद्गरस्थितामर्षरोहभावन वधमर्षणमित्याम्नायते ।

क्षुदध्वपरिश्रमतपोरोगादिभिरप्रच्युतवीर्यस्य शुष्कपादपस्येव निरार्द्रमूर्तेर्नतास्थिस्नायुजालस्य निम्नाक्षपुटपरिशुष्काधरक्षामगाट्र-कपोलस्य चर्मवत्सङ्कुचिताङ्गोपाङ्गत्वच शिथिलजानुगुल्फकटिबाहुप्रग्रस्य देशकालक्रमोपपन्नरसास्वादायिनो वाचंयमस्य मौनिसमस्य वा शरीरसन्दर्शनमात्रव्यापारस्योर्जितसत्त्वस्य प्रज्ञाऽऽध्यापितचेतस प्राणात्ययेऽपि वसत्याहारभेषजानि दीनाभिधानमुखवैवर्ण्याङ्गसञ्ज्ञादिभिरयाचमानस्य भिक्षाकालेऽपि विद्युद्द्योतवद्दुरुपलक्षितमूर्तेः बहुषु दिवसेषु रत्नवणिजो मणिसन्दर्शनमिव स्वशरीरप्रकाशमर्पण मन्यमानस्य मन्त्रमानं प्रति स्वकरविकासनमिव पाणिपुटधारणम दीनमिति गणयतो याचनासहनमवसीयते । अथवा पुनः परकृतोपाद्दीनानाथपाखण्डिबहुले जगत्यमार्गज्ञैरनात्मवद्भिर्याचनमनुष्ठीयते ।

वायुवत्सङ्गाननेकदेशचारिणोऽभ्युपगतैककालभोजनस्य सकृन्मूर्तिसन्दर्शितनवकालस्य 'देहि' इत्यसभ्यवचनमयोगादुपरतस्यानुवृत्तिविग्रहप्रतिनियम्याधेन्मिति व्यपेतसङ्कल्पस्यैकस्मिन् ग्रामेऽलाभे सति ग्रामान्तरान्वेषणनिरुत्सुकस्य पाणिपुटमात्रपात्रस्य बहुषु दिवसेषु बहुषु च गृहेषु भिक्षामनवाप्याप्यसंक्लिष्टचेतसो नायं दाता वराऽन्यो दानशूरोऽस्ति धन्यो वदान्योऽस्तीति व्यपगतपरीक्षस्य लाभादप्यलाभो मे परं तप इति सन्तुष्टस्यालाभविजयोऽवसेय ।

दुःखाधिकरणमशुचिभाजनं जीर्णवस्त्रवत्परिहेयं पित्तमारुतकफसन्निपातनिमित्तानेकामयवेदनाऽभ्यर्दितमन्यदीयमिव विग्रहं मन्यमानस्योपेक्षकत्वादाप्रच्युतेश्चिकित्साव्यावृत्तचेष्टस्य शरीरयात्राप्रसिद्धये व्रणानुलेपनवद्व्यथोक्तमाहारमाचरतो विरुद्धाहारसेवाविरसवैषम्यजनितवाताग्निविकाररोगस्य युगपदनेकशतसंख्याव्याधिप्रकोपे सत्यपि तद्वशवर्त्तितां विजहतो जल्लौषधिप्राप्त्याद्यनेकतपोविशेषर्द्धियोगे सत्यपि शरीरनिःस्पृहत्वात्प्रतीकारानपेक्षिणः पूर्वकृतपापकर्मणः फलमिदमनेनोपायेनाऽनृणी भवामीति चिन्तयतो रोगसहनं सम्पद्यते ।

यथाऽभिनिवृत्ताधिकरणशायिनः शुष्कतृणपरुषशर्कराभूमिकण्टकफलकशिलातलादिषु प्रासुकेष्वसंस्कृतेषु व्याधिमार्गगमनशीतोष्णजनितश्रमविनोदार्थं शय्यां निषद्यां वा भजमानस्य संस्कृतशुष्कतृणादिबाधितमूर्त्तेरुत्पन्नकण्डूविकारस्य दुःखमनभिचिन्तयतस्तृणादिस्पर्शबाधाभिरवशीकृतत्वात्तृणस्पर्शसहनमवगन्तव्यम् ।

जलजन्तुपीडापरिहारायास्नानप्रतिज्ञस्य स्वेदपङ्काङ्कितसर्वाङ्गस्य बादरनिगोदप्रतिष्ठितजीवदयार्थं च शरीरसंस्कारविरमणार्थं च परित्यक्तोद्वर्त्तनस्य सिध्मकच्छुदद्रूदीर्णकायस्य नखरोमश्मश्रुकेशविकृतसहजबाह्यमलसम्पर्ककारणानेकत्वग्विकारस्य स्वाङ्गमलापचये परमलापचये वाऽप्रणिहितचेतसः सङ्कल्पितसज्ज्ञानचारित्रविमलसलिलप्रक्षालनेन कर्ममलपङ्कापनोदायैवोद्यतस्य पूर्वानुभूतस्नानानुलेपनादिस्मरणपराङ्मुखचित्तवृत्तेर्मलधारणमाख्यायते । केशलुञ्चने तत्संस्काराकरणे महान्खेदः सञ्जायते तत्सहनमपि मलधारणेऽन्तर्भवतीति ।

चिरोषितब्रह्मचर्यस्य महातपस्विनः स्वपरसमयनिश्चयज्ञस्य हितोपदेशपरस्य कथामार्गकुशलस्य बहुकृत्वः परवादिविजयिनः प्रणामभक्तिसंभ्रमाऽऽसनप्रदानादीनि मे न कश्चित्करोतीत्येवमचिन्तयतो मानापमानयोः समानमनसः सत्कारपुरस्कारनिराकाङ्क्षस्य श्रेयोध्यायिनः सत्कारपुरस्कारजयो वेदितव्यः । सत्कारः प्रशंसादिकः, पुरस्कारो नाम नन्दीश्वरादिपर्वयात्रात्मकक्रियारम्भादिष्वग्रतःकरणमामन्त्रणं वा ।

अङ्गपूर्वप्रकीर्णकविशारदस्य कृत्स्नग्रन्थार्थपारिणोऽनुत्तरवादिनस्त्रिकालविषयार्थविदः शब्दन्यायाऽध्यात्मनिपुणस्य मम पुरस्तादितरे भास्करप्रभाभिभूतोद्योतवन्नितरामवभासन्त इति विज्ञानमदनिरासः प्रज्ञापरीषहजयः प्रत्येतव्यः ।

अज्ञोऽयं न किंचिदपि वेत्ति पशुसम इत्येवमाद्यधिक्षेपवचनं सहमानस्याध्ययनार्थग्रहणपराभिभवादिष्वनासक्तबुद्धेश्चिरप्रव्रजितस्य विविधतपोविशेषभाराक्रान्तमूर्तेः सकलसामर्थ्याप्रमत्तस्य विनिवृत्तानिष्टमनोवाक्कायचेष्टस्याद्याऽपि मे ज्ञानातिशयो नोत्पद्यत इत्येवमनस्यसंदधतोऽज्ञानपरीषहजयोऽवगन्तव्यः ।

सर्वाभिप्रधानस्य दुष्करतपोऽनुष्ठायिनः परमवैराग्यभावनाशुद्धहृदयस्य विदितसकलपदार्थतत्त्वस्यार्हदायतनसाधुधर्मपूजकस्य चिरन्तनप्रव्रजितस्याद्यापि मे ज्ञानातिशयो नोत्पद्यते महोपवासाद्यनुष्ठायिनां प्रातिहार्यविशेषाः प्रादुरभूवन्निति प्रलापमात्रमिदमनर्थकेयं प्रव्रज्या विफलं व्रतपालनमित्येवं मानसमनादधानस्य दर्शनविशुद्धियोगाददर्शनपरीषहसहनमवसातव्यम् ।

एवं परीषहानसङ्कल्पितोपस्थितान् सहमानस्यासंक्लिष्टचेतसो रागादिपरिणामास्रवाभावान्महान् संवरो भवति । एते सर्वेऽपि परीषहाः कर्मोदयजनितास्तद्यथा—

ज्ञानावरणे प्रज्ञाऽज्ञाने, दर्शनमोहान्तराययोरदर्शनालाभौ, चारित्रमोहे मानकषायोदये नाग्न्यनिषद्याऽऽक्रोशयाचनासत्कारपुरस्कारा, अरतिवेदयोररतिस्त्रीपरीषहौ, वेदनीये क्षुत्पिपासाशीतोष्णदंशमशकचर्याशय्यावधरोगतृणस्पर्शमला ।

एकस्मिन् जीव एकस्मिन् काले एकादय परीषहा आ एकोनविंशतेर्युगपद्भवन्ति । तद्यथा—शीतोष्णपरीषहयोरेकतरं, शय्याचर्यानिषद्यानामन्यतम एव भवति । श्रुतज्ञानापेक्षया प्रज्ञाप्रकर्षे सत्यवध्यभावापेक्षयाऽज्ञानोपपत्ते सहावस्थाविरोधो न भवति ।

मिथ्यादृष्टिसासादनसम्यग्दृष्टिसम्यङ्मिथ्यादृष्ट्यसंयतसम्यग्दृष्टिसंयतासंयतप्रमत्तसंयताप्रमत्तसंयतेषु सप्तसु गुणस्थानेषु सर्वे परीषहा सन्ति । अदर्शनपरीषहं विनाऽपूर्वकरण एकविंशतिपरीषहा भवन्ति । अरतिपरीषहमन्तरेण सवेदानिवृत्तौ विंशति परीषहा स्युः । अवेदानिवृत्तौ स्त्रीपरीषहे नष्टे एकोनविंशतिपरीषहा भवेयुः । तस्यैव मानकषायोदयस्य नाग्न्यनिषद्याऽऽक्रोशयाचनासत्कारपुरस्कारा विनश्यन्ति । तेषु विनष्टेषु अनिवृत्तिसूक्ष्मसाम्परायोपशान्तकषायक्षीणकषायेषु चतुर्षु गुणस्थानेषु चतुर्दश परीषहा सन्ति । क्षीणकषाये प्रज्ञाऽज्ञानाभावा विनश्यन्ति । सयोगिभट्टारकस्य ध्यानानलनिर्दग्धघातिकर्मेन्धनस्यानन्ताप्रतिहतज्ञानादिचतुष्टयस्यान्तरायाभावान्निरन्तरमुपचीयमानशुभपुद्गलसन्ततेर्वेदनीयाख्य कर्म विद्यमानमपि

प्रक्षीणघातिसहायबलं स्वप्रयोजनोत्पादने प्रत्यसमर्थं, यथा—निर्विषद्रव्यं मन्त्रौषधिबलादुपक्षीणमारणशक्तिकमुपयुज्यमानं न मारणाय समर्थं, यथा छिन्नमूलस्तरुः कुसुमफलप्रदो न भवति, यथोपेक्षावतोऽनिवृत्तिसूक्ष्मसाम्परायययोर्मैथुनपरिग्रहसंज्ञा, यथा च परिपूर्णज्ञान एकाग्रचिन्तानिरोधाऽभावेपि कर्मरजोविधूननफलसंभवाद्ध्यानोपचारः, तथा क्षुधारोगवधादिवेदनासद्भावपरीषहाभावे वेदनीयकर्मोदयद्रव्यपरीषहसद्भावादेकादश जिने सन्तीत्युपचारो युक्तः वेद्यकर्मोदयसद्भावादेकादश जिने सन्ति। घातिकर्मबलसहायरहितं वेद्यं फलप्रदं न भवति तेनैकादश जिने सन्ति। एवं सति स्यादस्ति स्यान्नास्तीति स्याद्वाद उपपन्नो भवति। तथा च शतकस्य प्रदेशबन्धे वेदनीयस्य भागविशेषकारणकथनेऽप्युक्तम्। "जम्हा वेदणीयस्स सुहदुक्खोदयस्स णाणावरणादि उवयरणकरणं तम्हा वेदणीयस्सेव सुहदुक्खोदयोहीसदे" इति। तस्माद्वेदनीयं घातिकर्मोदयं विना फलदं न भवतीति सिद्धम्।

नरकतिर्यग्गत्योः सर्वे परीषहाः, मनुष्यगतावाद्यभङ्गा भवन्ति, देवगतौ घातिकर्मोत्थपरीषहैः सह वेदनीयोत्पक्षुत्पिपासावधैः सह चतुर्दश भवन्ति। इन्द्रियकायमार्गणयोः सर्वे परीषहाः सन्ति, वैक्रियकद्विकस्य देवगतिभङ्गाः तिर्यङ्मनुष्यापेक्षया द्वाविंशतिः। शेषयोगानां वेदादिमार्गणानां च स्वकीयगुणस्थानभङ्गा भवन्ति।

## तपोवर्णनम् ।

रत्नत्रयाविर्भावार्थमिच्छानिरोधस्तप, । अथवा कर्मक्षयार्थं मार्गाविरोधेन तप्यत इति तप । तद्द्विविधं, बाह्यमाभ्यन्तरञ्च । अनशनादिबाह्यद्रव्यापेक्षत्वात्परप्रत्ययलक्षणत्वाच्च बाह्य, तत् षड्विध, अनशनावमोदर्यवृत्तिपरिसंख्यानरसपरित्यागविविक्तशय्यासन कायक्लेशभेदात् । अभ्यन्तरमपि षड्विध, प्रायश्चित्तविनयवैयावृत्त्य-स्वाध्यायव्युत्सर्गध्यानभेदात् ।

तत्राऽनशन नाम यत्किंचिद्दृष्टफल मन्त्रसाधनाद्यनुद्दिश्य क्रियमाणमुपवसनमनशनमित्युच्यते । तत्किमर्थं प्राणेन्द्रियसंयमप्रसिद्धि-रागद्वेषाद्युच्छेदबहुकर्मनिर्जरणशुभध्यानागमावाप्त्यर्थं । तद्द्विविध मवधृतानवधृतकालभेदात् । तत्रावधृतकाल सकृद्भोजनचतुर्थषष्ठाष्टमदशमद्वादशपक्षमासर्त्वयनसंवत्सरेष्वशनपानखाद्यस्वाद्यलक्षणचतुर्विधाहारनिवृत्ति । अनवधृतकालमादेहोपरमात् ।

आत्मीयप्रकृत्याेऽनस्य चतुर्थभागेनार्द्धेन ग्रासेण यानाहार नियमोऽवमोदर्यं । अवमोदर्यमिति च तत्किमर्थं निद्राजयार्थं दोष प्रशमनार्थमतिमात्राऽऽहारजातविहितस्वाध्यायमयार्थमुपवासश्रमसमुद्भूतवातपित्तप्रकोपपरिहीयमानसंयमसंरक्षणार्थं च ।

स्वकीयतपोविशेषेण रसरुधिरमांसशोषणद्वारेणेन्द्रियसंयम परिपालयतो भिक्षार्थिनो मुनेरेकागारसप्तवेश्मैकरथ्यार्द्धग्रामदातृजनवेषगृहभाजनभोजनादिविषयसंकल्पो वृत्तिपरिसंख्यानमाशानिवृत्त्यर्थमवगन्तव्यम् ।

शरीरेन्द्रियरागादिवृद्धिकरक्षीरदधिघृततैलगुडादिरसत्यजनं रस-परित्याग इत्युच्यते । तत्किमर्थं दुर्दान्तेन्द्रियतेजोहानि संयमो परोधनिवृत्तिरित्येवमाद्यर्थम् ।

ध्यानाध्ययनविघ्नकरस्त्रीपशुपण्डकादिपरिवर्जितगिरिगुहाकन्दर-पितृवनशून्यागाराऽऽरामोद्यानादिप्रदेशेषु विविक्तेषु जन्तुपीडारहितेषु संवृतेषु संयतस्य शयनासनं विविक्तशय्यासनं नाम । तत्किमर्थमाबा धात्ययब्रह्मचर्यस्वाध्यायध्यानादिप्रसिद्ध्यर्थमसभ्यजनदर्शनेन तत्स-हवासेन वा जनितत्रिकालविषयरागद्वेषमोहापोहार्थं वा ।

वृक्षमूलाभ्रावकाशाऽऽतापनयोगवीरासनकुक्कुटासनपर्यङ्कार्द्धपर्यङ्क-गोदोहनमकरमुखहस्तिशुण्डामृतकशयनैकपार्श्वदण्डधनुशय्यादिभिः शरीरपरिखेदः कायक्लेश इत्युच्यते । तत्किमर्थं वर्षाशीताऽऽतपवि षमसस्थुलाऽऽसनविषमशय्यादिषु शुभध्यानपरिचर्यार्थं दुःखोपनिपात तितिक्षार्थं विषयसुखानभिष्वङ्गार्थं प्रवचनप्रभावनाद्यर्थं च कायक्लेशानुष्ठानं क्रियते । इतरथा हि ध्यानप्रवेशकाले सुखोचितः स्यात्, द्वन्द्वोपनिपाते सति समाधानं न स्यात् । एवं षड्विधं बाह्यल-क्षणमुक्तम् ।

उत्तरमाभ्यन्तरमुच्यते । यतोऽन्यैस्तीर्थैरनभ्यस्तं ततोऽस्याऽऽ-भ्यन्तरत्वं, प्रायश्चित्तादितपो हि बाह्यद्रव्यानपेक्षत्वादन्तःकरणव्या पाराच्चाभ्यन्तरं । तत्र कर्तव्यस्याकरणे वर्जनीयस्यावर्जने यत्पापं सोऽतीचारस्तस्य शोधनं प्रायश्चित्तं । तत्किमर्थं प्रमाददोषव्युदासो भावप्रसादो नैःशल्यमनवस्थाव्यावृत्तिर्मर्यादात्यागः संयमदार्ढ्यं चतुर्विधाराधनमित्येवमादीनां सिद्ध्यर्थं प्रायश्चित्तं । तद्दशविधं,

आलोचन, प्रतिक्रमण, तदुभय, विवेक, व्युत्सर्ग, तप, छेद, मूल, परिहार, श्रद्धानमिति । तत्रैकान्तनिषण्णायापरिश्राविणे श्रुतरहस्याय गुरवे प्रसन्नमनसे विद्यायोग्योपकरणग्रहणादिषु प्रश्न-विनयमन्तरेण प्रवृत्तस्य विदितदेशकालस्य शिष्यस्य सविनयमात्म प्रमादनिवेदनमालोचनामित्युच्यते । तस्य दश दोषा भवन्ति, आक-म्पित, अनुमापित, यद्दृष्ट, बादर, सूक्ष्म, छन्न, शब्दाऽऽकुलित, बहुजन, अव्यक्त, तत्सेवितमिति । तत्रोपकरणेषु दत्तेषु प्रायश्चित्त मे लघु कुर्वीतेति विचिन्त्य भयदादान प्रथम आकम्पितदोष । प्रकृत्या ,पित्ताधिकोऽस्मि दुर्बलोऽस्मि ग्लानोऽस्मि नाऽलमहमु-पवासादिक कर्तुं यदि लघु दीयेत तद्दोषनिवेदन करिष्य इति वचन द्वितीयोऽनुमापितदोष । अन्यादृष्टदोषगूहन कृत्वा दृष्टदोषनिवेदन मायाचारस्तृतीयो यद्दृष्टदोष । आल-स्यात्प्रमादज्ञानाद्वाऽल्पापराधावबोधनिरत्सुकस्य स्थूलदोषप्रतिपादन तुर्यो बादरदोष । महादुश्चरप्रायश्चित्तभयाद्वाऽहो सूक्ष्मदोषपरि-हारकोयऽमिति स्वगुणाख्यापनचिकीर्षया वा महादोषसवरण कृत्वा तनुप्रमादाचारनिवेदन पचम सूक्ष्मदोष । ईदृशे व्रतातीचारे सति नु किं स्यात्प्रायश्चित्तमित्युपायेन गुरूपासना षष्ठश्छन्नदोष । पाक्षिक-चातुर्मासिकसांवत्सरिकेषु कर्मसु महति यतिसमवाय आलोचन-शब्दाकुले पूर्वदोषकथन सप्तम शब्दाकुलितदोष । गुरूपपादित प्रायश्चित्त किमिद युक्तमागमे स्यान्नवेति यावल्लघु प्रतिपादयति तावद्वा शङ्कमानस्याऽन्यसाधुपरिप्रश्नोऽष्टमो बहुजनदोष । यत्किंचित्प्रयो-जनमुद्दिश्याऽऽत्मना समानायैव प्रमादाचारितमावेद्य महदपि गृहीत

प्रायश्चित्त न फलकरमिति नवमोऽव्यक्तदोष । अन्यापराधेन ममातीचार समानस्तमयमेव वेत्यस्मै यद्दत्त तदेव मे युक्त लघु कर्त्तव्यमिति स्वदुश्चरितसवरण दशमस्तत्सेवितदोष । आत्मन्य पराध चिरमनवस्थाप्य निष्कृतिभावमन्तरेण बालवदृजुबुद्धेदोषाभि-धेन्यनो न ते दोषा भवन्त्यन्यस्य सयतालोचनमेकान्ते द्विविषय मिष्ट, सयतिकाऽऽलोचन प्रकाशे गपाश्रयमिष्ट, लज्जापरपरिभवादि गणनया निवेद्यातीचार न शोधयेत्परीक्षिताऽऽयव्ययोऽधमर्णवद्-वसीदति । महदपि तप कर्मानालोचनपूर्वक नाभिप्रेतफलप्रद साम देहगतौषधिवत् । कृताऽऽलोचनोऽपि गुरुमत प्रायश्चित्तमकुर्वाणो विनिश्चितमानुष्ठानशून्यराज्यव महती शाश्वतीं च सपद न प्राप्नोति । कृतालोचनचित्तगत प्रायश्चित्त परिमृष्टदर्पणगतरूपवत्परिभ्राजते ।

आम्पितानां योगानां धर्मकथादिव्याक्षेपहेतुसंनिधानेन विस्मरणे सत्यालोचन पुनरनुष्ठाय कस्य संवेगनिर्वेदपरस्य गुरुविरहितस्या ल्पापराधस्य पुनर्न करोमि मिथ्या मे दुष्कृतमित्येवमादिभिर्दोषा न्निवर्त्तन प्रतिक्रमण ।

किंचित्कर्माऽऽलोचनमात्रादेव शुद्धयत्यपर प्रतिक्रमणेनेतर दुःस्वप्नादिः तदुभयससर्गेण शुद्धिमुपयाति । आलोचनप्रतिक्रमणपूर्वं गुरुणाऽभ्यनुज्ञात शिष्येणैव कर्तव्य, तदुभय पुनर्गुरुणैवानुष्ठेयम् ।

ससक्तेषु द्रव्यक्षेत्रान्नपानोपकरणादिषु दोषान्निवर्त्तयितुमलभमा-नस्य तद्द्रव्यादिविभजन विवेक । अथ वा शक्त्यनवगूहनेन प्रय त्नेन परिहरत कुतश्चित्कारणादप्रासुकग्रहणग्राहणयो प्रासुकस्या-पि प्रत्याख्यातस्य विस्मरणात्प्रतिगृहे च स्मृत्वा पुनस्तदुत्सर्जन विवेक ।

दुःस्वप्नदुश्चिन्तनमलोत्सर्जनाऽऽगमातीचारनदीमहाटवीरणादिभिरन्यैश्चाप्यतीचारे सति ध्यानमवलम्ब्य कायमुत्सृज्यान्तर्मुहूर्तदिवसपक्षमासादिकालावस्थानं व्युत्सर्ग इत्युच्यते।

सत्त्वादिगुणालङ्कृतेन कृतापराधेनोपवासैकस्थानाचाम्लनिर्विकृत्यादिभिः क्रियमाणं तप इत्युच्यते। अथोन्मादत्वरणविस्मरणानवबोधाशक्तिव्यसनादिभिर्महाव्रतातीचारे सत्यनन्तरोक्तषड्विधप्रायश्चित्तं भवति। चिरप्रव्रजितस्य सहजबलस्य स्वभावशूरस्य गर्वितस्य कृतदोषस्य दिवसमासादिविभागेन प्रव्रजनं छित्त्वा छिलकाद्यधिनाऽवस्थानं छेदो नाम।

पार्श्वस्थादीनां मूलं प्रायश्चित्तं, तद्यथा—पार्श्वस्थः कुशीलः, ससक्तः, अवसन्नः, मृगचारित्र इति। तत्र यो वसतिषु प्रतिबद्ध उपकरणोपजीवी च श्रमणानां पार्श्वे तिष्ठतीति पार्श्वस्थः। क्रोधादिकषायकलुषितात्मा व्रतगुणशीलैः परिहीणः सङ्घस्यानयकारी कुशीलः। मन्त्रवैद्यकज्योतिष्कोपजीवी राजादिसेवकः संसक्तः। जिनवचनानभिज्ञो मुक्तचारित्रभारो ज्ञानाचरणभ्रष्टः करणालसोऽवसन्नः। त्यक्तगुरुकुल एकाकित्वेन स्वच्छन्दविहारी जिनवचनदूषको मृगचारित्रः स्वच्छन्द इति वा। एते पञ्च श्रमणा जिनधर्मबाह्याः। एवमुक्तपार्श्वस्थादिपञ्चविधोन्मार्गस्थितस्यापरिमितापराधस्य सर्वं पर्यायमपहाय पुनर्दीक्षादानं मूलमित्युच्यते।

परिहारोऽनुपस्थानपारञ्चिकभेदेन द्विविधः। तत्राऽनुपस्थानं निजपरगणभेदाद्द्विविधं। प्रमादादन्यमुनिसम्बन्धिनमृषिं छात्रं गृहस्थं वा परपाखण्डिप्रतिबद्धचेतनाचेतनद्रव्यं वा परस्त्रियं वा

स्तेनयतो मुनीन् प्रहरतो वाऽन्यदप्येवमादिविरुद्धाचरितमाचरतो नवदशपूर्वधरस्यादित्रिकसंहननस्य जितपरिषहस्य दृढधर्मिणो धीरस्य भवभीतस्य निजगुणानुपस्थापनं प्रायश्चित्तं भवति । तेन ऋष्याश्रमाद्द्वात्रिंशद्दण्डान्तरं विहितविहारेण बालमुनीनपि वन्दमानेन प्रतिवन्दनाविरहितेन गुरुणा सहाऽऽलोचयता शेषजनेषु कृतमौनव्रतेन विधृतपराङ्मुखपिच्छेन जघन्यतः पञ्चपञ्चोपवासा उत्कृष्टतः षण्मासोपवासाः कर्त्तव्याः, उभयमप्याद्वादशवर्षादिति । दर्पादनन्तरोक्तान्दोषानाचरतः परगणोपस्थापनं प्रायश्चित्तं भवतीति । स सापराधः स्वगणाचार्येण परगणाचार्यं प्रति प्रहेतव्यः, सोऽप्याचार्यस्तस्याऽऽलोचनमाकर्ण्य प्रायश्चित्तमदत्त्वाऽऽचार्यान्तरं प्रस्थापयति, सप्तमं यावत् पश्चिमश्च प्रथमाऽऽलोचनाऽऽचार्यं प्रति प्रस्थापयति, स एव पूर्वं पूर्वोक्तप्रायश्चित्तेनैनमाचारयति ।

परिहारस्य प्रथमभेदो द्विविधो गतः । पाराञ्चिकमुच्यते, तीर्थकरगणधरगणिप्रवचनसङ्घाद्यासादनकारकस्य नरेन्द्रविरुद्धाचरितस्य राजानभिमतामात्यादीनां दत्तदीक्षस्य नृपकुलवनितासेवितस्यैवमाद्यन्यैर्दोषैश्च धर्मदूषकस्य पाराञ्चिकं प्रायश्चित्तं भवति । चातुर्वर्ण्यं श्रमणाः सङ्घः सम्भूय तमाहूय 'एष महापातकी समयबाह्यो न वन्द्य' इति घोषयित्वा दत्त्वाऽनुपस्थानं प्रायश्चित्तं देशान्निर्घाटयन्ति ।

मिथ्यात्वं गत्वा स्थितस्य पुनरपि गृहीतमहाव्रतस्याऽऽप्ताऽऽगमपदार्थानां श्रद्धानमेव प्रायश्चित्तं, तदेतद्दशविधं, देशकालशक्तिसंयमाद्यविरोधेनाल्पानल्पापराधानुरूपं दोषप्रशमनं चिकित्सितवद्विधेयं । जीवस्याऽसंख्येयलोकमात्रपरिमाणाः परिणामविकल्पा अपराधाश्च

तावत एव न तेषां तावद्विकल्पं प्रायश्चित्तमस्ति व्यवहारनयापेक्षया पिंडीकृत्य प्रायश्चित्तविधानमुक्तम्।

कषायेन्द्रियविनयनं विनयः, अथवा रत्नत्रयस्य तद्वतां च नीचैर्वृत्तिर्विनयः, स चतुःप्रकारः। ज्ञानविनयो दर्शनविनयश्चारित्रविनय उपचारविनयश्चेति। तत्राऽनालस्येन शुद्धमनसा देशकालादिविशुद्धिविधानविचक्षणेन सबहुमानेन यथाशक्ति निषेव्यमाणो मोक्षार्थं ज्ञानग्रहणाभ्यासस्मरणादिर्ज्ञानविनयः। सामायिकादौ लोकबिन्दुसारपर्यंते श्रुतसमुद्रे ये यथा भगवद्भिरुपदिष्टा पदार्थास्तेषां तथा श्रद्धाने निःशंकितत्वादिलक्षणोपेतता दर्शनविनयः। ज्ञानदर्शनचारित्रतपोवीर्यवतो दुश्चरचरणश्रमणानंतरमुद्भिन्नरोमाञ्चाभिव्यज्यमानान्तर्भक्तेः परं प्रसादमस्तकाञ्जलिकरणादिभिर्भावयतश्चानुष्ठातृत्वं चारित्रविनयः। उपचारविनयो द्विविधः, प्रत्यक्षः परोक्ष इति। तत्राऽऽचार्योपाध्यायस्थविरप्रवर्त्तकगणधरादिषु पूजनीयेष्वभ्युत्थानमभिगमनमञ्जलिकरणं वंदनाऽनुगमनं रत्नत्रयबहुमानं सर्वकालयोग्यानुरूपक्रियाऽनुलोमता सुनिगृहीतत्रिदंडता सुशीलयोगता धर्मानुरूपकथाकथनश्रवणभक्तिताऽर्हदायतनगुरुभक्तिता दोषवर्जनं गुणवृद्धसेवाऽभिलाषाऽनुवर्त्तनं पूजनं। यदुक्तं—"गुरुस्थविरादिभिर्नान्यथा तद्दित्यनिशं भावनं समेष्वनुत्सेको हीनेष्वपरिभवं जातिकुलधनैश्वर्यरूपविज्ञानबललाभर्द्धिषु निरभिमानता सर्वत्र क्षमापरता मितहितदेशकालाऽनुगतवचनता कार्याकार्यसेव्यासेव्यवाच्यावाच्यज्ञातृता इत्येवमादिभिरात्मानुरूपः प्रत्यक्षोपचारविनयः।" परोक्षोपचारविनय उच्यते, परोक्षेष्वप्याचार्यादिष्वंजलिक्रियागुण-

सत्कीर्तनानुस्मरणाऽऽज्ञानुष्ठायित्वादि कायवाङ्मनोभिरवगन्तव्य, रागप्रहसनविस्मरणैरपि न कस्याऽपि पृष्ठमांसभक्षण करणीयमेवमादि परोक्षोपचारविनय प्रत्येतव्य । मन्त्रौषधोपकरणयशसत्कारलाभाद्यनपेक्षितचित्तेन परमार्थनिस्पृहमतिनैहलौकिकफलनिरुत्सुकेन कर्मभयकाङ्क्षिणा ज्ञानलाभाऽऽचारविशुद्धिसम्यगाराधनादिसिद्ध्यर्थं विनयभावन कर्तव्यम् । तनश्चापवर्गद्वार निरर्गलम् ।

वैयावृत्त्यमुच्यते । कायपीडादुष्परिणामव्युदासार्थं कायचेष्टया द्रव्यान्तरेणोपदेशेन च व्यापृतस्य यत्कर्म तद्वैयावृत्त्य । तद्दशविध, आचार्योपाध्यायतपस्विशैक्ष्यग्लानगणकुलसंघसाधुमनोज्ञवैयावृत्त्यभेदेन । यस्मात् सम्यग्ज्ञानादिपञ्चाचाराधारादाहृत्य व्रतानि स्वर्गापवर्गसुखरसपनुजबीजानि भव्या आत्महितार्थमाचरन्ति स आचार्य । विनयेनोपेत्य यस्माद्व्रतशीलभावनाऽधिष्ठानादागम श्रुताभिधानमधीयते स उपाध्याय । आचाम्लवर्द्धनसर्वतोभद्रसिंहनिष्क्रीडितगात कुम्भमन्दरपङ्क्तिविमानपङ्क्तिनन्दीश्वरपङ्क्तिजिनगुणसंपत्तिश्रुतज्ञानकनकावलिमुक्तावलिमृदङ्गमध्यवज्रमध्यकर्मक्षपणत्रैलोक्यसारादिमहोपवासानुष्ठायी तपस्वी । श्रुतज्ञानशिक्षणपरोऽनुपरतव्रतभावनानिपुण शैक्ष । रुजादिभि क्लिष्टशरीरो ग्लान । स्थविराणा सन्ततिर्गण । दीक्षकस्याऽऽचार्यस्य शिष्यस्याऽऽम्नाय कुल । चातुर्वर्ण्यश्रमणनिवह संघ । चिरकालभावितप्रव्रज्यागुण साधु । अभिरूपो मनोज्ञ, आचार्याणा संमतो वा दीक्षाभिमुखो वा मनोज्ञ, अथ वा विद्वान् वाग्मी महाकुलीन इति यो लोकस्य संमत स मनोज्ञस्तस्य

१ कल्पवृक्ष ।

ग्रहणं प्रवचनस्य लोके गौरवोत्पादनहेतुत्वादसंयतसम्यग्दृष्टिर्वा सत्कारोपेतरूपत्वान्मनोज्ञः। आचार्यादीनां व्याधिपरीषहमिथ्यात्वाद्युपनिपाते सत्यप्रत्युपकाराशया प्रासुकौषधभुक्तिपानाऽऽश्रयपीठफलकसंस्तरादिभिर्धर्मोपकरणैस्तत्प्रतीकारः सम्यक्त्वप्रत्यवस्थापनमित्येवमादि वैयावृत्त्यं। बाह्यस्यौषधभुक्तिपानादेरसंभवे स्वकायेन श्लेष्मसिंघाणकान्तर्मलाद्यपकर्षणादि तदानुकूल्यानुष्ठानं च वैयावृत्त्यमिति कथ्यते, तत्पुनः किमर्थं समाध्याधानविचिकित्साऽभाव प्रवचनवात्सल्य सनाथताद्यर्थं चेत्येवमाद्यर्थम्।

स्वाध्यायो भण्यते। स्वस्मै हितोऽध्यायः स्वाध्यायः, स च वाचनापृच्छनाऽनुप्रेक्षाऽऽम्नायधर्मोपदेशभेदेन पञ्चविधः। तत्र निरपेक्षात्मना मुमुक्षुणा विदितवेदितव्येन निरवद्यस्य ग्रन्थस्यार्थस्य तदुभयस्य वा पात्रं प्रति प्रतिपादनं वाचनेत्युच्यते। आत्मोन्नतिप्रकटनार्थं पराभिसंधानार्थमुपहासस्संघर्षप्रहसनादिवर्जितः संशयच्छेदाय निश्चितबलाधानाय वा ग्रन्थस्यार्थस्य तदुभयस्य परं प्रति पर्यनुयोगः पृच्छना। अधिगतपदार्थप्रक्रियस्य तप्तायःपिंडवदर्पितचेतसो मनसाऽभ्यासोऽनुप्रेक्षा। व्रतिनो विदितसमाचारस्यैहलौकिकफलनिरपेक्षस्य द्रुतविलम्बितपदाक्षरच्युतादिदोषविशुद्धं परिवर्त्तनमाम्नायः। दृष्टप्रयोजनपरित्यागादुन्मार्गनिवर्त्तनार्थं सन्देहव्यावर्त्तनार्थमपूर्वपदार्थप्रकाशनार्थं धर्मकथाद्यनुष्ठानं धर्मोपदेशः। किमर्थोऽयं स्वाध्यायः, प्रज्ञातिशयः प्रशस्ताध्यवसायः, प्रवचनस्थितिः, संशयोच्छेदः, परवादिशङ्काऽभावः, प्रभावना, परमसंवेगः, तपोवृद्धिः, अतीचारविशुद्धिः, कषायेन्द्रियजयः, परमोपायः, इत्येवमाद्यर्थं स्वाध्यायोऽनुष्ठेयः।

कायोत्सर्ग उच्यते । विविधाना बाह्याभ्यन्तराणा बन्धहेतूना दोषाणामुत्तमस्त्यागो व्युत्सर्ग । आत्मनाऽनुपात्तस्यैकत्वमनापन्न स्याहारादेस्त्यागो बाह्योपधिव्युत्सर्ग । क्रोधमानमायालोभमिथ्यात्वहास्यरत्यरतिशोकभयादिदोषनिवृत्तिराभ्यन्तरोपधिव्युत्सर्ग , कायत्यागश्चाऽभ्यन्तरोपधिव्युत्सर्ग । स द्विविध । यावज्जीव, नियतकालश्चेति । तत्र यावज्जीव त्रिविध । भक्तप्रत्याख्यानेङ्गिनीमरणप्रायोपगमनभेदात् । तत्र भक्तप्रत्याख्यान जघन्येनान्तर्मुहूर्त्तमुत्कृष्टेन द्वादशवर्षाणि, अवान्तरो मध्यम उभयोपकारसापेक्ष भक्तप्रत्याख्यानमरण । परप्रतीकारनिरपेक्षमात्मोपकारसापेक्षमिङ्गिनीमरण । उभयोपकारनिरपेक्ष प्रायोपगमन । नियतकालो द्विविध , नित्यनैमित्तिकभेदेन । नित्य आवश्यकाद्य । नैमित्तिक पार्वणी क्रिया निषद्यक्रियादयश्च । क्रियाकरणे वन्दनाया कायोत्सर्गस्य च द्वात्रिंशद्द्वात्रिंशद्दोषा भवन्ति । तत्र वन्दनाया अनादृत, स्तब्ध, प्रविष्ट, परपीडित, दोलायित, उन्मत्तक, कच्छपरिगत, मत्स्योद्वर्त्तन, मनोदुष्ट, वेदिकाबध, भेप्यत्व, भीषित, ऋद्धिगौरव, गौरव, स्तेनित, प्रत्यनीक, क्रोधादिशल्य, तर्जित, शब्दित, हेडित, त्रिवलित, कुचित, आचार्यादिदर्शन, अदृष्ट, सघकरमोचन, अलब्ध, अनालब्ध, हीन, अधिक, चूर्र, मुखान्तामिति द्वात्रिंशद्दोषा भवन्ति । व्युत्सृष्टबाहुयुगले चतुरङ्गुलान्तरितसमपादे सर्वाङ्गचलनरहिते कायोत्सर्गेऽपि दोषा स्यु । घोटकपाद, लतावक्र, स्तम्भावष्टम्भ, कुड्याश्रित, मालिकोद्वहन,, शबरीगुह्यगूहन, शृखलित, लम्बित, उत्तरित, स्तनदृष्टि, काकालोकन, खलीनित, युगकन्धर,

कपित्थमुष्टि, शीर्षप्रकम्पित, मूकसंज्ञा, अङ्गुलिचालन, भ्रूक्षेप, उन्मत्त, पिशाच, अष्टदिगवलोकन, ग्रीवोन्नमन, ग्रीवावनमन, निष्ठीवन, अङ्गस्पर्शनामिति द्वात्रिंशद्दोषा भवन्ति।

क्रियां कुर्वाणो वीर्यापगूहनमकृत्वा शक्त्यनुरूपतः स्थितेनाशक्तः सन्पर्यङ्कासनेन वा त्रिकरणशुद्धया संपुटीकृतकरः क्रियाविज्ञापनपूर्वकं सामायिकदण्डकमुच्चारयेत्, तदावर्त्तत्रयं यथाजातं शिरोन्नमनमेकं भवति, अनेन प्रकारेण सामायिकदण्डकसमाप्तावपि प्रवर्त्त्य यथोक्तकालं जिनगुणानुस्मरणसहितं कायव्युत्सर्गं कृत्वा द्वितीयदण्डकस्यादावन्ते च तथैव प्रवर्त्तनं, एवमेकैकस्य कायोत्सर्गस्य द्वादशावर्त्ताश्चत्वारि शिरोवनमनानि भवन्ति। अथवैकस्मिन् प्रदक्षिणीकरणे चैत्यादीनामभिमुखीभूतस्याऽऽवर्त्तत्रयैकावनमने कृते चतसृष्वपि दिक्षु द्वादशावर्त्ताश्चतस्रः शिरोवनतयो भवन्ति। आवर्त्तानां शिरःप्रणतीनामुक्तप्रमाणादाधिक्यमिति न दोषाय। उक्तं च—

दुवणदं जहाजादं बारसावत्तमेव च।
चदुस्सिरं तिसुद्धिं च किदियम्मं पउंजदे॥

वक्ष्यमाणक्रियाणां कालनियम उच्यते। दैवसिकस्य नियमस्याष्टोत्तरशतं, रात्रिकस्य तदर्द्धं, पाक्षिकस्य त्रिशतं, चातुर्मासिकस्य चतुःशतं, सांवत्सरिकस्य पञ्चशतं, उच्छ्वासानामेषां पञ्चानां नियमान्तस्य कायोत्सर्गस्य प्रमाणं। अहिंसादिपञ्चनियमानामन्यतमस्यातीचारे सत्येकैकस्याष्टोत्तरशतं, गोचारस्य ग्रामान्तरगमनस्याऽर्हच्छ्रमणनिषद्यानामुच्चारप्रस्रवणयोश्च पञ्चविंशतिः, ग्रन्थप्रारम्भे परिसमाप्तौ च स्वाध्याये वन्दनायां प्रणिधाने च सप्तविंशतिः। एवमुक्तो-

च्छ्वासप्रमाणेन कायोत्सर्गं कृत्वा अनुत्सुकः सन् किंचित्कालं धर्म्यं शुक्लं च ध्यायेत् । नामस्थापनाद्रव्यभावसंनिधानं पुण्यपापास्रवहेतुरत चैत्य चैत्यालयो गुरवो निषद्यास्थानादयश्च सम्यग्दृष्टीनां क्रियार्हा भवन्ति । अचेतनात्मका व्यपगतरागानुद्भूय कल्पवृक्षचिन्तामणयो यथा च देहिनां पुण्यानुरूपेणाभिलषितार्थप्रदायिनस्तथा जिनबिंबानि भव्यजनभक्त्यनुरूपेण स्वर्गनिर्वाणफलप्रदायीनि गारुडमुद्रया यथा गरलापहरणं तथा चैत्यालोकनमात्रेणैव दुरितापहरणं भवत्यतश्चैत्यस्य तदाश्रयचैत्यालयस्याऽपि वन्दना कार्या ऐहिके कार्ये निरपेक्षाः परानुग्रहबुद्ध्योऽकारणबन्धवो मोक्षपरिभ्रष्टजनमार्गोपदेशकाः प्रत्यक्षनिस्तारकाश्च ततस्तेभ्यः सकाशात्सम्यक्त्वज्ञानाऽऽचरणमणुव्रतं महाव्रतं संयमो तपश्च भवति ।

तेन गुरूणा पुण्यपुरुषोषितनिरवद्यनिषद्यास्थानादीनामुच्यते क्रियाविधानं । परायत्तस्य सतः क्रिया कुर्वाणस्य कर्मक्षयो न घटते, तस्मादात्माधीनः सच्चैत्यादीन् प्रतिवन्दनार्थं गत्वा धौतपादस्त्रिःप्रदक्षिणीकृत्येर्यापथकायोत्सर्गं कृत्वा प्रथममुपविश्याऽऽलोच्य चैत्यभक्तिकायोत्सर्गं करोमीति विज्ञाप्योत्थाय जिनेन्द्रचन्द्रदर्शनमात्रनिजनयनचन्द्रकान्तोपलविगलदानन्दाश्रुजलधारापूरपरिप्लावितपक्ष्मपुटोऽनादिभवदुर्लभभगवदर्हत्परमेश्वरपरमभट्टारकप्रतिबिंबदर्शनजनितहर्षोत्कर्षपुलकिततनुरतिभक्तिभरावनतमस्तकन्यस्तहस्तकुशेशयकुड्मलो दण्डकद्वयस्यादावन्ते च प्राक्तनक्रमेण प्रवृत्य चैत्यस्तवनेन त्रि-परीत्य द्वितीयवारेऽप्युपविश्याऽऽलोच्य पंचगुरुभक्तिकायोत्सर्गं करोमीति विज्ञाप्योत्थाय पंच परमेष्ठिनः स्तुत्वा तृतीयवारेऽप्युपवि-

दयाऽऽलोचनीय । एवमात्माधीनता, प्रदक्षिणीकरण, त्रिवार, निष्पन्नत्रय, चतु शिरो, द्वादशावर्त्तमिति क्रियाकर्म षड्विध भवति । तत्र चतु शिरो दण्डकद्वयाद्यन्ते प्रणतौ प्रदक्षिणीकरणे च दिक्चतुष्टयावनतौ चतु शिरो भवति, अथवा शिर शब्द प्रधानवाची वन्दनाप्रधानभूता अर्हत्सिद्धसाधुधर्मा इति । उक्त च राद्धान्तसूत्रे । " आदाहीण पदाहीण तिखुत्त तिऊणद चदुस्सिर बारसावत्त चेति । " एव देवतास्तवनक्रियाया चैत्यभक्ति पचगुरुभक्ति च कुर्यात् ।

चतुर्दशीदिने तयोर्मध्ये सिद्धश्रुतशान्तिभक्तिर्भवति । अष्टम्या सिद्धश्रुतचारित्रशान्तिभक्तय । पाक्षिके सिद्धचारित्रशान्तिभक्तय । सिद्धप्रतिमाया सिद्धभक्तिरेव, जिनप्रतिमायास्तीर्थंकरजन्मनश्च पाक्षिकी क्रिया, अष्टम्यादिक्रियासु दर्शनपूजा त्रिकालवन्दनायोगे शान्तिभक्तित प्राक् चैत्यभक्ति पचगुरुभक्ति च कुर्यात् । चतुर्दशीदिने धर्मव्यासगादिना क्रिया कर्तु न लभेत चेत्पाक्षिकेऽष्टम्या क्रिया कर्त्तव्या नन्दीश्वरदिने सिद्धनन्दीश्वरपचगुरुशान्तिभक्त्योऽभिषेकवन्दनाया सिद्धचैत्यपचगुरुशान्तिभक्तय । स्थिरचलजिनप्रतिमाप्रतिष्ठाया सिद्धशान्तिभक्ती भवत । स्थिरप्रतिमायाश्चतुर्थस्थाने सिद्धभक्तिरालोचनासहिता चारित्रभक्तिश्चैत्यपचगुरुशान्तिभक्तयश्च कार्या । चलप्रतिमाया अभिषेकवन्दना स्यात् । महत्तरस्य सामान्येपि सिद्धभक्तिपूर्विका वदना । सिद्धान्तविदा सिद्धश्रुतभक्ती भवत । आचार्याणा सिद्धाचार्यभक्ती । सिद्धान्तवेदिनामाचार्याणा सिद्धश्रुतसूरिभक्तय । प्रतिमायोगस्थितस्य मुनेर्यंगरोन्दे सिद्ध-

योगशान्तिभक्त्य । निष्क्रमणे सिद्धचारित्रयोगशातिभक्तयो र्भवन्ति प्रदक्षिणीकरण योगभक्त्या । ज्ञानोत्पत्तौ सिद्धश्रुतचरणयोगशान्तिभक्तयो योगभक्त्या प्रदक्षिणीकरण । जिननिर्वाणक्षेत्रे सिद्धश्रुतचारित्रयोगपरिनिर्वाणशान्तिभक्तयो निर्वाणभक्त्या प्रदक्षिणीकरण । श्रीवर्द्धमानजिननिर्वाणदिने सिद्धनिर्वाणपञ्चगुरुशान्ति भक्त्य निर्वाणभक्त्या प्रदक्षिणा । सामान्यर्षौ मृते शरीरस्य निषद्यकास्थानस्य वा सिद्धयोगशान्तिभक्त्य । सिद्धान्तवेदिना साधूना सिद्धश्रुतयोगशान्तिभक्त्य । उत्तरयोगिना सिद्धचारित्रयोगशान्तिभक्त्य । सैद्धान्तोत्तरयोगिना सिद्धचारित्रयोगशान्तिभक्त्य । आचार्यस्य सिद्धयोगाचार्यशान्तिभक्त्य । सैद्धान्ताचार्यस्य सिद्धश्रुतयोगाचार्यशान्तिभक्त्य । उत्तरयोगिनामाचार्याणा सिद्धचारित्रयोगाचार्यशान्तिभक्त्य । उत्तरयोगिन सैद्धान्ताचार्यस्य सिद्धश्रुतयोगाचार्यशान्तिभक्त्य । अनतरोक्ता अष्टौ क्रिया शरीरस्य निषद्यास्थानस्य च । श्रुतपञ्चम्या सिद्धश्रुतभक्तिपूर्विका वाचना गृहीत्वा तदनु स्वाध्याय गृह्णत श्रुतभक्तिमाचार्यभक्ति च कृत्वा गृहीतस्वाध्याया कृतश्रुत भक्त्य स्वाध्याय निष्ठाप्य समाप्तौ शान्तिभक्तिं कुर्यु । सन्यास प्रारभे सिद्धश्रुतभक्ती कृत्वा गृहीतवाचना कृतश्रुतसूरिभक्त्य स्वाध्याय गृहीत्वा श्रुतभक्तौ स्वाध्याय निष्ठापयेयु । वाचनानिष्ठापनेऽपीमा किया कृत्वा समाप्तौ शान्तिभक्तिं कुर्वन्तु । सन्यास स्थितस्य स्वाध्यायग्रहणे महाश्रुतसूरिभक्ती कृत्वा गृहीतस्वाध्याया महाश्रुतभक्तौ निष्ठापयन्तु । दैवसिकरात्रिगोचारीप्रतिक्रमणे सिद्ध-

प्रतिक्रमणानिष्ठितकरणचतुर्विंशतितीर्थंकरभक्तीर्नियमेन कुर्यात्। योगग्रहणे मोक्षे च योगभक्तिं। पाक्षिकचातुर्मासिकसांवत्सरिकप्रतिक्रमणे सिद्धचारित्रप्रतिक्रमणनिष्ठितकरणचतुर्विंशतितीर्थंकरभक्तिचारित्रालोचनागुरुभक्तय बृहदालोचना गुरुभक्तिर्लघीयसी आचार्यभक्तिश्च करणीया। शेषप्रतिक्रमणे चारित्रालोचनाबृहदालोचनागुरुभक्तिं विना शेषा कर्तव्या। दीक्षाग्रहणे लुंचने च सिद्धयोगभक्ती कृत्वा लुंचनावसाने सिद्धभक्तिं करणीया। सिद्धयोगभक्ती कृत्वा प्रत्याख्यानं गृहीत्वाऽऽचार्यभक्तिं कृत्वाचार्यान्वन्दता सिद्धभक्तिं कृत्वा प्रत्याख्यानं मोचयेत्। श्रुतभक्तिमाचार्यभक्तिं च कृत्वा गृहीतस्वाध्यायस्तन्निष्ठापने श्रुतभक्तिं करोतु। मङ्गलगोचरमध्याह्ने सिद्धचैत्यपञ्चगुरुशान्तिभक्तिं कुर्यात्। मङ्गलगोचरप्रत्याख्याने महासिद्धयोगभक्ती कृत्वा गृहीतप्रत्याख्यानं आचार्यशान्तिभक्ती कुर्यात्। वर्षाकाले योगग्रहणे निष्ठापने च सिद्धयोगपञ्चचैत्यगुरुभक्तय कार्या, चैत्यभक्त्या प्रदक्षिणीकुर्वन् सालोचनव्युत्सर्गं चतसृषु दिक्षु कुर्यात्। सिद्धान्तवाचनाग्रहणे सिद्धश्रुतभक्ती कृत्वा तदनुश्रुताचार्यभक्तिः कृत्वा गृहीतस्वाध्यायस्तन्निष्ठापने श्रुतशान्तिभक्ती करोतु। सिद्धान्तस्यार्थाधिकाराणां समासावेकैकं कायोत्सर्गं कुर्यात्। अर्थाधिकाराणां बहुमान्यत्वात्तेषामादौ सिद्धश्रुतसूरिभक्ती कृत्वा समासावप्येतेन क्रमेण प्रवर्तिते सति षट् कायोत्सर्गा भवन्ति। गुरूणामनुज्ञया ज्ञानविज्ञानवैराग्यसम्पन्नो विनीतो धर्मशील स्थिरश्च भूत्वाऽऽचार्यपदव्या योग्य साधुर्गुरुसमक्षे सिद्धाचार्यभक्तिं कृत्वाऽऽचार्यपदवीं गृहीत्वा शान्तिभक्तिं कुर्यात्। एव-

मुक्ता क्रिया यथायोग्य जघन्यमध्यमोत्तमश्चावै सयतैश्च करणीया । किमर्थो व्युत्सर्गो नि सगत्व निर्भयत्व जीविताशाव्युदासो दोषच्छेदो मोक्षमार्गभावनापरत्वमित्येवमाद्यर्थम ।

अथ ध्यानप्रस्तार । एकाग्रचिंतानिरोधो ध्यान, एकस्मिन् क्रियासाधनेऽग्र मुख यस्याश्चिन्ताया इत्येकाग्रचिन्ता तस्या निरोधो ऽन्यत्राऽसचारस्तदेकाग्रचिन्तानिरोधो ध्यान । तस्य योगश्चतुर्विध, ध्यान, ध्येय, ध्याता, फलमिति । तत्र ध्यान चिन्ताप्रबन्धलक्षण । ध्येयमप्रशस्तप्रशस्तपरिणामकारण । ध्याता कषायकलुषिनो गुप्तेन्द्रियश्च । फल ससारभ्रमण स्वर्गापवर्गसुख च । तदेतच्चतुरगध्यानमप्रशस्तप्रशस्तभेदेन द्विविध, श्रेयोऽधिकारेऽप्रशस्तोपन्यास परिज्ञातस्य प्रहेयत्वोपपत्ते । अप्रशस्त द्विविधमार्त्त रौद्र चेति । तत्राऽऽर्त्त बाह्याऽऽध्यात्मिकभेदाद्द्विविकल्प । तत्र परानुमेय बाह्य शोचनक्रन्दनविलपनपरिदेवनविषयसगपरिभवविस्मयादिलक्षण । स्वसवेद्यमाध्यात्मिकार्त्तध्यान, अमनोज्ञविप्रयोगस्यानुत्पत्तिसकल्पाध्यवसान, उत्पन्नस्य च विनाशसकल्पाध्यवसानमिति चतु प्रकार । तद्यथा— अमनोज्ञ दु खसाधन, तच्च बाह्यमाध्यात्मिकमिति द्विविध । तत्र बाह्य चेतनकृतमचेतनकृतमिति द्विप्रकार । तत्र चेतनकृत नैषमनुष्यतिर्यक्सपादितमसात, अचेतनकृत च विषकटकाग्निशस्त्रक्षारशीतोष्णादिजनितदु ख । आध्यात्मिककारण शारीर मानसमिति द्विविध । तत्र शारीर वातपित्तश्लेष्मवैषम्यसमुद्भवशिरोऽक्षिदन्तकुक्षिशूलादिजनित । मानस चाऽरतिभयशोकभयजुगुप्साविषाददौर्मनस्यादिजनितमित्यादिदु खसाधनममनोज्ञ, तेन सप्रयोग स कथ नाम

मे नोत्पद्यत इति चिन्ताप्रबन्ध, सकल्पस्तस्या यवसान तीव्रकपा-यानुरजन, एतदमनोज्ञमप्रयोगस्यानुत्पत्तिसङ्कल्पा यवसान प्रथ-मार्त्त। एतद्दु खसाधनसद्भावे तस्य विनाशकाङ्क्षोत्पन्नविनाशसक-ल्पाध्यवसान द्वितीयार्त्त। मनोज्ञ नाम धनधान्यहिरण्यसुवर्णवस्तु वाहनशयनाऽऽसनस्रक्चन्दनवनितादिसुखसाधन मे स्यादिति गर्द्धन। मनोज्ञविप्रयोगस्योत्पत्तिसकल्पा यवसान तृतीयार्त्त। सुख-साधनसद्भावे तेन विप्रयोगो मे न स्यादिति सकल्प उत्पन्नविनाश-सकल्पाध्यवसान चतुर्थार्त्त। एतच्चतुर्विधमार्त्तध्यान कृष्णानीलकापोतले-श्याबलाधान प्रमादाधिष्ठान। प्रागप्रमत्ताच्छ्गुणस्थानभूमिकमन्त-र्मुहूर्तकालमत पर दुर्धरत्वात् क्षायोपशमिकभावपरोक्षज्ञानत्वात्ति-र्यग्गतिफलसवर्त्तनीयमिति।

रौद्र च बाह्याऽऽध्यात्मिकभेदेन द्विविध। तत्र परानुमेय बाह्य परुषनिष्ठुराऽऽक्रोशननिर्भर्त्सनबन्धनतर्जनताडनपीडनपरदारातिक्र मणादिलक्षण। स्वसवेद्यमाध्यात्मिक तच्च हिंसानन्दमृषानन्दस्तेयान न्दविषयसरक्षणानन्दभेदाच्चतुर्विध। तीव्रकषायानुरजन हिंसानन्द प्रथमरौद्र। स्वबुद्धिविकल्पितयुक्तिभि परेषा श्रद्धेयरूपाभि परवचन प्रतिमृपाकथने सकल्पा यवसान मृषानन्द द्वितीयरौद्र। हठात्कारेण प्रमादप्रतीक्षया वा परस्वापहरण प्रति सकल्पाध्यवसान तृतीय रौद्र। चेतनाचेतनलक्षणे स्वपरिग्रहे ममैवेद स्वमहमेवास्य स्वामी-त्यभिनिवेशात्तदपहारकव्यापादनेन सरक्षण प्रति सकल्पाध्यवसान सरक्षणानन्द चतुर्थ रौद्र। चतुष्टयमपीदमिति कृष्णानीलकापोतले-

१ स्वं धनम्।

श्यावलाधान प्रमादाधिष्ठान । अप्रमत्तात्पञ्चगुणस्थानभूमिकमन्त-मुहूर्तकालमत पर दुर्धरत्वात् क्षायोपशमिकभावं परोक्षनानत्वादौद-यिकभाव वा भावलेश्याकषायप्राधान्यान्नरकगतिफलसवर्तनीयमिति ।

उभयमप्येतदपध्यान परिहरन्नपवर्गकामो भिक्षु परीषहबाधा-सहिष्णु शक्तिमदुत्तमसहननान्वित प्रशस्तध्यानप्रवणो गिरिगुहाट-रीकन्दरतरुकोटरसरित्पुलिनपितृवनजीर्णोद्यानशून्यगृहादीनामन्यतम-स्मिन् प्रदेशे व्यालपशुमृगपक्ष्यमनुष्यादीनामगोचरे तत्रत्यागतुकज-न्तुभि परिवर्जितेऽत्युष्णातिशीतातिवातातिवर्षातपरहिते समन्तादि-न्द्रियमनोविक्षेपहेतुनिराकरणभूने शुचावनुकूलस्पर्शिनि भूमितले यथा सुखमुपविष्टो बद्धपर्यङ्कासन स्वाङ्के वामपाणितलस्योपरि दक्षिणपा णितलमुत्तान निधाय नेत्रे नात्युन्मीलयन्नातिमीलयन् दन्तैर्दन्ताग्राणि सन्धान प्राणापानप्रचारात्यतनिग्रहे तीव्रदु खाकुलचेतस एकाकारप-रिणामो न जायते, ततो मन्दमन्दप्राणापानप्रचार स्यादेव द्रव्यक्षेत्र कालभावशुद्धिसयुतस्तत्प्रतिपक्षदोषवर्जित परमयोगी ससारलतामूलो-च्छेदनहेतुभूत प्रशस्तध्यान ध्यायेत् ।

तत् द्विविध, धर्म्यं शुक्ल चेति । तत्र धर्म्यध्यान बाह्या ध्या-त्मिकभेदेन द्विप्रकार । तत्र परानुमेय बाह्य सूत्रार्थगवेषण दृढव्रत शीलगुणानुरागनिभृतकरचरणवदनकायपरिस्पन्दवाग्व्यापार जृम्भजृम्भो द्गारक्षवथुप्राणापानोद्रेकादिविरमणलक्षण भवति । स्वसवेद्यमाध्या त्मिक, तद्दशविध, अपायविचय, उपायविचय, जीवविचय, अजी वविचय, विपाकविचय, विरागविचय, भवविचय, सस्थानाविचय, आज्ञाविचय, हेतुविचय, चेति । एतद्दशविधमपि दृष्टश्रुतानुभूतदो-

यपरिवर्जनपरस्य मन्दनरकषायानुरञ्जितस्य भव्यवरपुण्डरीकस्य भवति। तत्रापायविचयं नामानाद्यावर्जने यथेष्टचारिणो जीवस्य मनोवाक्कायप्रवृत्तिविशेषोपार्जितपापानां परिवर्जनं तत्कथं नाम मे स्यादिति सङ्कल्पाश्रिताप्रबन्धः प्रथमधर्म्यं। उपायविचयं प्रशस्तमनोवाक्कायप्रवृत्तिविशेषोऽवश्यं कथं मे स्यादिति सङ्कल्पो द्वितीयधर्म्यम्। जीवविचयं जीव उपयोगलक्षणो द्रव्यार्थादनाद्यनन्तोऽसङ्ख्येयप्रदेशः स्वकृतशुभाशुभकर्मफलोपभोगी गुणवानात्मोपात्तदेहमात्रः प्रदेशसंहरणविसर्पणधर्मा सूक्ष्मोऽव्याघात ऊर्ध्वगतिस्वभावोऽनादिकर्मबन्धनबद्धस्तत्क्षया मोक्षभागी गत्यादि-नामादि-निर्देशादि सदादि प्रमाण-नयनिक्षेपविषय इत्यादिजीवस्वभावानुचिन्तनं तृतीयं धर्म्यं। विपाकविचयमष्टानां कर्माणि नामस्थापनाद्रव्यभावलक्षणानि मूलोत्तरोत्तरप्रकृतिविकल्पविस्तृतानि गुडखण्डसिताऽमृतमधुरविपाकानि निम्बकाञ्जीविषहालाहलकटुकविपाकानि चतुर्विधबन्धानि लताद्वार्वस्थिशैलस्वभावानि कासु कासु गतिषु योनिष्ववस्थासु च जीवानां विपया भवन्तीति विपाकविशेषानुचिन्तनं पञ्चमधर्म्यं, विरागविचयं शरीरमिदमनित्यमपरित्राणं विनश्वरस्वभावमशुचिदोषाधिष्ठितं सप्तधातुमयं बहुमलपूर्णमनवरतनिस्यन्दिस्रोतोविलमतिबीभत्समाधेयमशौचमपि पूतिगन्धि सम्यग्ज्ञानिजनवैराग्यहेतुभूतं नास्त्यत्र किञ्चित्कमनीयमिन्द्रियसुखानि प्रमुखरमिकानि क्रियावसानविरसानि किंपाकपाकविपाकानि पराधीनान्यस्थानभङ्गुरभङ्गुराणि। यावद्यावदेषां रामणीयकं तावत्तावद्भोगिनां तृष्णाप्रसङ्गोऽनवस्थो यथाऽग्नेरिन्धनैर्जलनिधेः सरित्सहस्रेण न तृप्तिस्तथा लोकस्याप्येतैर्न तृप्तिरशान्तिर्धीरिका-

मुनिरावीनिपातहेतवस्तानि देहिन सुखानीति मन्यन्ते महादु खकार णान्यना मीयत्यादिष्टा यप्यनिष्टानीति वैराग्यकारणविशेषानुचिन्तन षष्ठ धर्म्यं । भवविचय सचित्ताचित्तमिश्रशीतोष्णमिश्रसंवृतविवृतमिश्रभेदासु योनिषु जरायुजाण्डजपोतोपपादसम्मूर्च्छनजन्मनो जीवस्य भवाद्भवान्तरसंक्रमण इषुगतिपाणिमुक्तालाङ्गलिकागोमूत्रिकाश्चतस्रो गतयो भवन्ति । तत्रेषुगतिरविग्रहैकसामयिकी ऋज्वी संसारिणा सिद्ध्यता च जीवाना भवति । पाणिमुक्तैकविग्रहा द्विसामयिकी संसारिणा भवति । लाङ्गलिका द्विविग्रहा त्रिसामयिकी । गोमूत्रिका त्रिविग्रहा चतु सामयिकी भवति । एवमनादिससारे संधावतो जीवस्य गुणविशेषानुपलब्धिमतस्तस्य भवसंक्रमण निरर्थकमित्येव मादिभवभ्रमणदोषानुचिन्तन सप्तम धर्म्यं । यथावस्थितमीमासास्थानविचय तद्द्वादशविध, अनित्यत्वमशरणत्व संसार एकत्वमन्यत्वमशुचित्वमास्रव संवरो निर्जरा लोको बोधिदुर्लभो धर्मस्वाख्यात इत्यनुप्रेक्षा । उक्त हि ।

समुदेति विलयमृच्छति भावो नियमेन पर्ययनयस्य ।
नोदेति नो विनश्यति भवनतया लिङ्गितो नित्यम् ॥

तत्रानित्यत्वमात्मना रागादिपरिणामात्मना कर्मणो धर्मभावेन गृहीतानि पुद्गलद्रव्याण्यगृहीतानि परमाण्वादीनि तेषा सर्वेषा द्रव्यात्मना नित्यत्वं, पर्यायात्मना सततमनुपरतभेदसंसर्गवृत्तित्वा दनित्यत्वमिमानि हि शरीरेन्द्रियविषयोपभोगपरिभोगद्रव्याणि समुदायरूपाणि मरुत्बुद्बुदवदनवस्थितस्वभावानि गर्भादिष्ववस्थाविशेषेषु सदोपलभ्यमानसंयोगविपर्ययाणि मोहोदयादज्ञानी नित्यता

-मन्यते, न किंचित्संसारे ध्रुवमस्त्यात्मनो ज्ञानदर्शनोपयोगस्वभावा-दन्यदिति चिन्तनमनित्यत्वानुप्रेक्षा, एवमस्य चिन्तयतस्तेष्वभिष्व-ङ्गाभावाद्भुक्तोज्झितगन्धमाल्यादिष्विव वियोगकालेऽपि विनिपातो नोत्पद्यते ।

अशरणत्वे शरण द्विविध, लौकिक, लोकोत्तर चेति । प्रत्येक त्रिविध जीवाजीवमिश्रकभेदात् । तत्र लौकिक जीवशरण राजा देवता, प्राकाराद्यजीवशरण प्राकारान्वित, ग्रामनगरादि मिश्रक । लोकोत्तरजीवशरण पञ्च गुरवस्तत्प्रतिबिम्बाद्यजीवशरण सधर्म-साधुवर्गोपकरण मिश्रकशरण । यथा मृगशावकस्यैकान्ते बलवता क्षुधितेनामिषैषिणा व्याघ्रेणाभिद्रुतस्य न किंचिच्छरणमस्ति तथा ज-न्मजराव्याधिप्रियवियोगाप्रियसयोगेप्सिताऽलाभदारिद्र्यदौर्मनस्यादि-समुत्थितेन दुःखेनाभिभूतस्य जन्तो शरण न विद्यते । परिपुष्ट-मपि शरीर भोजन प्रति सहायी भवति न व्यसनोपनिपाते सति । यत्नेन सचिता अप्यर्था न भवान्तरमनुगच्छन्ति । सविभक्तसुख-दुःखा सुहृदोऽपि न मरणकाले परित्रायन्ते बान्धवा समुदिताश्च रुजा परीत न परिपान्ति । अस्ति चेत्सुचरितो धर्मो व्यसनमहार्णवे तरणोपायो भवति । मृत्युना नीयमानस्य सहस्रनयनादयोऽपि न शरण तस्माद्भव्यसनसकटे धर्म एव शरण सुहृदर्थोऽप्यननुयायी नान्यत्किंचिच्छरणमिति भावनमशरणानुप्रेक्षा । एवमस्य भावयतो नित्यमशरणोऽस्मीति भृशमुद्विग्नस्य सासारिकेषु भावेषु ममत्वविगमो भवति, भगवदर्हत्सर्वज्ञप्रणीतागम एव प्रतिपन्नो भवेत् ।

ससारश्च, ससारोऽससारो नो ससारस्त्रितयव्यपायश्चेति चतुर्वि-धावस्था । तत्र ससारश्चतसृषु गतिषु नानायोनिविकल्पासु परिभ्रमण,

शिवपदपरमामृतसुखप्रतिष्ठाऽससार , सयोगकेवलिनश्चतुर्गतिभ्रमणाभावात्ससारान्त प्राप्त्यभावाच्चेषत्ससारो नो ससार इति,तत्रितयव्यपायोऽयोगिकेवलिनो भवभ्रमणाभावात् सयोगिकेवलिवत्प्रदेशपरिस्पन्दविगमात्ससारान्तावाप्त्यभावाच्च देहपरिस्पन्दाऽभावेऽपि देहिन सतत प्रदेशाचलनमस्ति, तत सदा ससार एव सिद्धानामयोगिकेवलिना च नास्ति प्रदेशाचलन तयोस्त्यकर्मसामग्र्यभावादितरेषा त्रिधाऽवसीयते । स पुन ससार , अभव्यापेक्षयाऽनाद्यनिधन , भव्यसामान्यार्पणयाऽनादिरुच्छेदवान्, भव्यविशेषविवक्षया क्वचित्सादि सनिधन । अससार सादिरनिधन । तत्रितयव्यपायोऽन्तर्मुहूर्तकाल । नो-ससारो जघन्येनान्तर्मुहूर्त । उत्कृष्टेन देशोनपूर्वकोटिकाल । सादि सपर्यवसान ससारो जघन्येनाऽन्तर्मुहूर्त । उत्कृष्टेनार्द्धपुद्गलपरावर्तनकाल । स च ससारो द्रव्यक्षेत्रकालभवभावभेदात्पचविधो, द्रव्यनिमित्त ससारो द्विविध कर्मनोकर्मविवक्षाभेदात्कर्मद्रव्यससारो ज्ञानावरणादिविषयो नोकर्मद्रव्यससार औदारिकवैक्रियकाऽऽहारकतैजसशरीराणामाहारशरीरेन्द्रियाऽऽनपानभाषामन पर्याप्तीना विषय । क्षेत्रहेतुक ससारो द्विविध , स्वक्षेत्रपरक्षेत्रविकल्पात् । लोकाकाशतुल्यप्रदेशस्यात्मन कर्मोदयवशात्सहरणविसर्पणधर्मिणो हीनाधिकाकाशप्रदेशपरिमाणावगाहत्व स्वक्षेत्रससार । सम्मूर्च्छनगर्भोपपादजन्मनवयोनिविकल्पाद्यवष्टम्भ परक्षेत्रससार । परमार्थव्यवहारभेदेन कालो द्विविध । तत्र यावतो लोकाकाशप्रदेशास्तावन्त कालाणव परस्पर प्रत्यबधा एकैकस्मिन्नाकाशप्रदेशे एकैकवृत्त्या लोकव्यापिनो मुख्योपचारप्रदेशक

१ क ' पुस्तके तैजस इति पाठो नाऽस्ति ।

रूपना, भावाविरवयवा, मुख्यप्रदेशकल्पना हि धर्माधर्मजीवाकाशेषु पुद्गलेषु च द्व्यणुकादिस्कन्धेषु परमाणुपूपचारप्रदेशकल्पना प्रचयशक्तियोगात्। विनाशहेत्वभावान्नित्या, विविधपरिणामिषट्द्रव्यपर्यायपरिवर्तनहेतुत्वादनित्या, रूपरसगन्धस्पर्शयोगाभावादमूर्ता, जीवप्रदेशवत्प्रदेशान्तरसंक्रमणाऽभावान्निष्क्रिया इति परमार्थकाल। व्यवहारकाल परमार्थकालवर्तनया लब्धकालव्यपदेश परिणामादिलक्षण। कुतश्चित्परिच्छिन्नोऽपरिच्छिन्नस्य परिच्छेदहेतु। भूतो वर्तमानो भविष्यन्निति त्रिविध काल परस्परापेक्षत्वात्, यथा वृक्षपंक्तिमनुसरतो देवदत्तस्यैकैक तरु प्रति प्राप्तप्राप्नुवत्प्राप्स्यद्व्यपदेशस्तथा तात्कालाणूननुसरता द्रव्याणा क्रमेण वर्त्तनापर्यायमनुभवता भूतवर्तमानभविष्यद्व्यवहारसद्भाव। तत्र परमार्थकाले भूतादिव्यवहारो गौणो व्यवहारकाले तु मुख्य। किमत्र बहुनोक्तेन परमार्थकालेन कारणभूतेन तेन षट् द्रव्याणि परावर्त्यन्ते कार्यरूपाणि। तेषा द्रव्याणा परिच्छेदका समयावलिकादय। द्रव्यस्यैकपर्याय एकसमयो द्वित्रिचतु सख्येयासख्येयानन्तपर्यायकलापा। द्वित्रिचतु सख्येया असख्येया अनन्तसमया यथा प्रदीप स्वपरप्रकाशकस्तथैव काल स्वपरप्रवर्त्तक, अथवा सर्वजघन्यगतिपरिणतस्य परमाणो स्वावगाढाकाशप्रदेशव्यतिक्रमण काल परमनिरुद्धो निर्विभाग समय इति कालससार।

भवनिमित्तससारो द्वात्रिंशद्विध पृथिव्यप्तेजोवायुकायिका प्रत्येक चतुर्विधा सूक्ष्मबादरपर्याप्तापर्याप्तभेदात्। वनस्पतिकायिका द्वेधा प्रत्येकशरीरा साधारणशरीराश्चेति। प्रत्येकशरीरा द्वेधा पर्याप्त

कापर्याप्तकभेदात् । साधारणशरीरा आहारशरीरेन्द्रियोच्छ्वासनि-श्वासपर्याप्त्युत्पादननिमित्तमाहारवर्गणाया गृहीतपुद्गलपिंडास्तत्र यत्रैको म्रियते जीवस्तत्र मरणमनंतानां यत्रैकश्चोत्पद्यते तत्राऽनंता-नामुत्पत्तिर्भवति तेषां लिंगं गूढशिरादि । उक्तं च—

साहारणमाहारो साहारणमाणपाणगहणं च ।
साहारणजीवाणं साहारणलक्खणं भणियं ॥ १ ॥
जत्थेक्कु मरइ जीवो तत्थ दु मरणं भवे अणंताणं ।
चक्कमइ जत्थ एक्को चक्कमणं तत्थ णंताणं ॥ २ ॥
गूढसिरसंधिपव्वं सममंगमहीरुहं च छिण्णरुहं ।
साहारणं सरीरं तव्विवरीयं च पत्तेयं ॥ ३ ॥
मूले कंदे छल्ली पवालसालदलकुसुमफलबीजे ।
समभंगे सदिणंता असमे सदि होंति पत्तेया ॥ ४ ॥
कंदस्स व मूलस्स व सालाखंधस्स चावि बहुलतरी ।
छल्ली साणंतजिया पत्तेयजिया दु तणुकदरी ॥ ५ ॥

ते च साधारणशरीराश्चतुर्धा सूक्ष्मबादरपर्याप्तकापर्याप्तकविक-ल्पात् । द्वित्रिचतुरिन्द्रिया प्रत्येकं द्वेधा, पर्याप्तकापर्याप्तकविकल्पात् । पंचेन्द्रियाश्चतुर्धा संज्ञ्यसंज्ञिपर्याप्तकापर्याप्तकापेक्षयेति ।

भावनिमित्तसंसारो द्वेधा स्वभावपरभावाश्रयात् । स्वभावो मिथ्या-दर्शनकषायादि, परभावो ज्ञानावरणादिकर्मरसादि । एवमेतस्मिन्न-नेकयोनिकुलकोटिबहुशतसहस्रसंकटे संसारे परिभ्रमन्नयं जीवः कर्म-यन्त्रप्रेरितः पिता भूत्वा भ्राता पुत्रः पौत्रश्च भवति । माता भूत्वा भगिनी भार्या दुहिता च भवति । किं बहुना स्वयमात्मनः पुत्रो

भवतीत्येवमादिससारे स्वभावचिन्तन ससारानुप्रेक्षा। एवमस्य भावयत ससारदु खभयादुद्विग्नस्य ततो निर्वेदो भवति निर्विण्णश्च ससारप्रहाणाय प्रतियतते।

अथैकत्वानुप्रेक्षावर्णन। जन्मजरामरणाऽऽवृत्तिमहादु खानुभवन प्रति सहायानपेक्षत्वमेकत्व। एकत्वमनेकत्वमेतदुभय द्रव्यक्षेत्रकालभावविकल्प। तत्र द्रव्यैकत्व जीवादिष्वन्यतमद्रव्यविषयत्वेनाऽभेदत्व। क्षेत्रैकत्व परमाण्ववगाढप्रदेश। कालैकत्वमभेदसमय। भावैकत्व मोक्षमार्गे। तथाऽनेकत्वमपि भेदविषय, न हि किंचिदेकमेव निश्चितमस्ति अनेकमेव वा एकमपि सामान्यार्पणया विशेषार्पणयाऽनेकमपि भवति। तत्र परिप्राप्तबाह्याभ्यतरोपधित्यागस्य सम्यग्ज्ञानादेश्त्वनिश्चयमारूढत यथाख्यातचारित्रैकवृत्तेर्मोक्षमार्गभावेनैकत्व तत्प्राप्तय-एक एवाऽह न कश्चिन्मे स्व परो वा विद्यते, एक एव जायत एक एव म्रियते, न मे कश्चिज्जन परजनो वा व्याधिजरामरणादीनि दु खान्यपहरति, बन्धुमित्राणि श्मशान नाऽतिवर्तन्ते, धर्म एव मे सहाय सदाऽनपायीति चिन्तनमेकत्वाऽनुप्रेक्षा। एवमस्य भावयत स्वजनेषु प्रीत्यनुबधो न भवति, परजनेषु द्वेषानुबधो नोपजायते, ततो नि सगताऽभ्युपजायते, ततो नि सगतो मोक्षोऽवघटते। इत्येकत्वानुप्रेक्षा।

अथाऽन्यत्वाऽनुप्रेक्षाप्रकरणम्। अन्यत्व चतुर्धा व्यवतिष्ठते, नामस्थापनाद्रव्यभावाऽऽलबनभेदात्। आत्मा जीव इति नामभेद।

१ इति पाठ ,'क' पुस्तके नाऽस्ति।

काष्ठप्रतिमेति स्थापनाभेदः । जीवद्रव्यमजीवद्रव्यमिति द्रव्यभेदः । एकस्मिन्नपि द्रव्ये बालो युवा मनुष्यो देव इत्यादि भावभेदः जीवकर्मणो बंध प्रत्येकत्वे सत्यपि लक्षणवशादन्यत्वं, जीवस्तावज्ज्ञानदर्शनोपयोगलक्षण । वर्णगंधरसस्पर्शवन्तः पुद्गला इति लक्षणकृतो भेदः । प्रतिसमयमनन्तानन्ताः कर्माणवो योगवशादागत्य जीवप्रदेशेष्वन्योन्यप्रदेशाऽनुप्रविष्टाः सन्तः कषायवशादवतिष्ठन्ते समयप्रत्यनन्तानन्ताः कर्मपुद्गला जीवं परित्यज्य प्रच्यवन्त इति बंध प्रति भेदः । नो कर्मपुद्गला अपि बन्धनगुणेन जीवे क्षीरनीरन्यायेनैकबन्धनबद्धा भूत्वा प्रतिक्षणं निर्जीर्यन्ते जीवः स्वयं कर्मवशात्तत्प्रायोग्यशरीरं निर्माय शरीरेऽनेऽपि यथा नखरोमदन्तास्थिषु न विद्यते तथा रुधिरवसाशुक्ररसश्लेष्मपित्तमूत्रपुरीषमस्तिष्कादिषु प्रदेशेष्वपि नास्ति एवं कर्मशरीरावयवेभ्यो जीवस्याऽन्यत्वं तत् कुशलपुरुषप्रयोगमन्थौ शरीरादन्यत्वं यत्नेनाऽऽत्मनो ज्ञानादिभिरनन्यैरत्यैमुक्तावस्थानं तत्प्राप्तये—ऐन्द्रियकं शरीरमतीन्द्रियोऽहं, अज्ञं शरीरं ज्ञस्वभावोऽहं, अनित्यं शरीरं नित्योऽहं, आद्यन्तवच्छरीरमनाद्यनन्तोऽहं, बहूनि मे शरीरशतसहस्राण्यतीतानि संसारे परिभ्रमतः स एवाऽहमन्यस्तेभ्य इति शरीरादन्यत्वं मे । किमङ्ग पुनर्बाह्येभ्य परिग्रहेभ्य इति चिन्तनमन्यत्वानुप्रेक्षा । एवमस्य मनः समाधानस्य शरीरादिषु स्पृहा नोत्पद्यते ततश्च श्रेयसे वर्तते । इत्यन्यत्वाऽनुप्रेक्षा ।

१ अङ्ग इति सम्बोधनं कोमलाऽऽलापमन्त्रणे ।

अथाऽशुचित्वाऽनुप्रेक्षा—शुचित्वं द्वेधा, लोकोत्तरं लौकिकं चेति। तत्राऽऽत्मनो विशुद्धध्यानजलप्रक्षालितकर्ममलकलङ्कस्य स्वात्मन्यवस्थानं लोकोत्तरशुचित्वं, तत्साधनानि सम्यग्दर्शनज्ञानचारित्रतपांसि तद्वन्तश्च साधवस्तदधिष्ठानानि च निर्वाणभूम्यादिकानि । तत्प्राप्त्युपायत्वाच्छुचिव्यपदेशमर्हन्ति । लौकिकं शुचित्वं कालाऽग्निभस्ममृत्तिकागोमयसलिलाऽज्ञाननिर्विचिकित्सत्वभेदादष्टविधं तदिदं शरीरं शुचीकर्तुं न शक्यते कुतोऽत्यन्ताऽशुचित्वात् शरीरमिदमाद्युत्तराशुचिकारणादिभिरशुचि लक्ष्यते । तद्यथा—आद्यं तावत्कारणं शरीरस्य शुक्रं शोणितं च तदुभयमत्यन्ताऽशुचि । उत्तरकारणमाहारपरिणामादिकवलाऽऽहारोऽपि ग्रस्तमात्रः श्लेष्माशयं प्राप्य श्लेष्मणा द्रवीकृतोऽधिकमशुचि भवति, ततः पित्ताशयं प्राप्य पच्यमान आम्लीकृतोऽशुचिरेव भवति, पक्वो वाताशयमवाप्य वायुना विभज्यमानः खलरसभावेन भिद्यते । खलभागो मूत्रपुरीषादिविविधमलविकारेण विविच्यते, रसभागः शोणितमांसमेदोऽस्थिमज्जाशुक्रभावेन परिणमते । सर्वेषां चैषामशुचीनां भाजनं शरीरमवस्करवदशक्यप्रतीकारं । खल्विदं शरीरं स्नानानुलेपनधूपप्रघर्षणस्रङ्माल्यादिभिरपि न शक्यमशुचित्वमपहर्तुं । अङ्गारवदाश्रितमपि द्रव्यमाशु वाऽऽत्मस्वभावमापादयति । शरीरजा अपि गोमयगोरोचनादन्तिदन्तचमरीवालमृगनाभिखड्गिविषाणमयूरपिच्छसर्पमणिशुक्तिमुक्ताफलादयो लोकेषु शुचित्वमुपगताः । नास्त्यत्र पुनः शरीरे किंचित्कमनीयं शुचि वा न जलादीनां शुचिहेतुत्वं । सम्यग्दर्शनादि पुनर्भाव्यमानं जीवस्यात्यन्तिकीं—शुद्धिमाविर्भावयतीति तत्त्वभावनमशु-

चिन्ताऽनुप्रेक्षा । एवमस्य संस्मरतः शरीरनिर्वेदो भवति निर्विण्णश्च जन्मोदधितरणाय चित्तं समाधत्त इत्यशुचित्वाऽनुप्रेक्षावर्णनम् ।

अथाऽऽस्रवाऽनुप्रेक्षावर्णनं विधीयते । उद्वेगार्थमास्रवोपक्षेपः, आस्रवा इहाऽमुत्र चापाययुक्ता महानदीस्रोतोवेगतीक्ष्णा इन्द्रियादयः । अविरलसरलशल्लकीसहकारवराकुडंगप्रमथनस्वच्छसरोवरम-ज्जनावगाहनमृदुपुलिनस्पर्शनमहीतलविहरणादिगुणसंपन्ना वनविहारिणो मत्ताः महाकाया बलवन्तोऽपि वारणा हस्तिबन्धकीषु स्पर्शनेन्द्रिय-प्रमत्तचित्ता मनुष्यविधेयतामुपगम्य वधबन्धनवाहनाङ्कुशताडनपा-र्ष्णिघातादिजनितं तीव्रं दुःखमनुभवन्ति । नित्यमेव च स्वयूथस्वच्छ-न्दप्रचारसुखस्य वनवासस्याऽनुस्मरन्तो महान्तं खेदमवाप्नुवन्ति । तथैव जिह्वेन्द्रियविषयलोभात् स्रोतोवेगावगाहिमृतहस्तिशरीरस्था वायसाः अपारसागरावर्तान्ति पातन्यमनमुपनिपतन्ति । मत्स्याश्चागाधसलिलचारिणो लोचनगोचरातीता रसनेन्द्रियवशागता आमिषलोभेन लोहमास्वाद्य म्रियन्ते । घ्राणेन्द्रियलोलुपाश्चौषधगन्धलुब्ध पन्नगा विनिपातमिच्छन्ति, मधुकराश्च गजमदलुब्धा गजकर्णमल सत्रमुपगम्य मरणमासादयन्ति । चक्षुरिन्द्रियविषयीकृता प्रदीपावलोकेन लोभेन पतङ्गा व्यसनप्रपाताऽभिमुखा भवन्ति । श्रोत्रेन्द्रियविषयसमाकृष्टमनसो गीतध्वनिविषयविस्मृततृणग्रसना हरिणा अनर्थाभिमुखा भवन्ति । परत्र च नानाजातिषु बहुविधदुःखप्रज्वलितासु पर्यटन्ति । तथा स्वयप्रमादाद्रसगतसुखस्पर्शाद्यभिलोभाऽऽकृष्टचित्तोऽयं

ध्यरोगे वई विशोधयति भवति ।

ग्रीवो विद्याधरचक्रवर्ती त्रिखण्डाधिपति सपुत्र सबान्धवो निधनतामुपगत । तथा च रसनेन्द्रियघ्राणेन्द्रियलोलुप सुभूम सकलचक्रवर्ती पट्खण्डाधिपतिर्वणिग्वेषधारिणा जन्मान्तरवैरिणा समुद्रमध्ये मरणमुपगत । तथा च बर्बरीचिलातिकानृत्यावलोकनविहिताऽऽसक्तिर्दमितारिरर्द्धचक्रवर्त्ती सकलपरिजनसमेतो विराममुपजगाम । तथा च हस्तिपकमधुरगीतश्रवणसमक्तमतिरमृतमतिर्यशोधरमहाराजमहादेवी स्वकुलपरिभ्रष्टा कुष्ठाधिष्ठितशरीरा मृतिमुपगम्य नरकदु खभागिनी बभूव। एवमेकैकेन्द्रियविषयविपसमैस्तथाविधा अपि विनष्टा. किं पुन पचेन्द्रियविषयाभिलाषिण इत्येवमाद्यास्रवदोषाऽनुचिन्तनमास्रवाऽनुप्रेक्षा । एवमस्य चिन्तयत क्षमादिधर्मे श्रेयस्त्वबुद्धिर्न प्रच्यवते । सर्वेऽप्येते आस्रवदोषा कर्मवत्सवृतेन्द्रियस्य न भवन्ति। इत्यास्रवाऽनुप्रेक्षावर्णनम् ।

अथ सवराऽनुप्रेक्षावर्णन विधीयते । आस्रवनिरोध सवर । यथा वणिड्महार्णवे यानपात्रविवरद्वारजलास्रवपिधाने निरुपद्रवमभिलषितदेशान्तर प्राप्नोति तथा मुनिरपि ससारार्णवे शरीरपोतस्येन्द्रियविषयद्वारकर्मजलास्रव तपसा पिधाय मुक्तिरत्नपत्तन निर्विघ्न प्राप्नोति इत्येव सवरगुणाऽनुचिंतन सवराऽनुप्रेक्षा । एवमस्य चिन्तयत सवरे नित्योद्युक्तता भवति । इति सवराऽनुप्रेक्षावर्णनम् ।

अथ निर्जराऽनुप्रेक्षावर्णन विधीयते । कर्मैकदेशगलन निर्जरा, साऽपि द्वेधा, उदयोदीरणाविकल्पात् । तत्र नरकादिपु कर्मफलविपाकोदयोद्भवा । परीपहजयोदुदीरणोद्भवा । सा शुभाऽनुबन्धा

निरनुबधा चेत्येव निर्जराया गुणदोषभावन निर्जराऽनुप्रेक्षा । एव मस्याऽनुस्मरत कर्मनिर्जरायै वृत्तिर्भवति । इति निर्जराऽनुप्रेक्षा-वर्णनम् ।

अथ लोकाऽनुप्रेक्षावर्णन विधीयते । जीवादिपदार्थाधिकरण लोक समन्तादनन्तानन्तस्याऽऽत्मप्रतिष्ठाऽऽकाशमुमहतम यत्प्रदेशस्थितस्तत्तनुवातघनाम्बुघनवाताधिवेष्टितो लोकस्तन्मध्यगता त्रसनाडी, तन्मध्ये महामेरुस्तस्याध स्थिता नरकप्रस्तारा, मेरुपरिवृता शुभना मानो द्वीपसमुद्रा द्विर्द्विर्विष्कम्भा वलयाकृतयो, मेरोरुपरि स्वर्ग-पटलानि, तेषामुपरि सिद्धक्षेत्र । एवमधस्तिर्यगूर्ध्वभेदभिन्नस्य चतुर्दशरज्ज्वायामस्य सप्तैकपञ्चैकरज्जुप्रमाणपूर्वापरविभागस्य सप्तरज्जुविस्तारदक्षिणोत्तरदिग्भागस्य वेत्रासनझल्लरीमृदङ्गसमानाऽऽकारस्य षट्-द्रव्यनिचितस्याकृत्रिमस्यानादिनिधनस्य लोकस्य स्वभावपरिणामप-रिणाहसंस्थानाऽनुचिंतन लोकाऽनुप्रेक्षा । एवमस्या यवम्यनसनरवज्ञा-नविशुद्धिर्भवति । इति लोकानुप्रेक्षावर्णनम् ।

अथ बोधिदुर्लभाऽनुप्रेक्षावर्णन विधीयत । स्कन्धाण्डराऽऽवासपुलविशरीरेषु स्कन्धा असंख्यातलोकमात्रा, एकैकस्मिन् स्कन्धेऽस ख्यातलोकमात्रा अडरा, एकैकस्मिन्नडर आवासा असंख्यातलोक मिताएकैकस्मिन्नावासे पुलवयोऽसंख्यातलोकप्रमाणा, एकैकस्मिन्पुलवौ असंख्यातलोकमितानि शरीराण्येकैकस्मिन्निगोदशरीरे जीवा सर्वातीतकालसिद्धानामनन्तगुणा । उक्त च ।

एयनिगोयसरीरे जीवा दव्वपमाणदो दिट्ठा ।
सिद्धेहिं अणतगुणा सव्वेण वितीदकालेण ॥

इत्येव सर्वलोको निरन्तरं निचितः स्थावरैस्ततस्तत्र वालुकासमुद्रे पतितवज्रसिकताकणिकेव त्रसता दुर्लभास्तत्र च विकलेंद्रियाणां प्रचुरभूयिष्ठत्वात्पंचेंद्रियता गुणेषु कृतज्ञतेव कृच्छ्रलभ्या । तत्र च तिर्यक्षु पशुमृगपक्षिसरीसृपादिषु बहुषु सत्सु मनुष्यभवश्चतुष्पथे रत्नराशिवद्दुरासदस्तत्प्रच्यवे पुनस्तदुपपत्तिर्दग्धा तरुपुद्गलतद्भावाऽऽपत्तिवद्दुर्लभा । तल्लाभे च कुदेशानां हिताहितविचारविरहितानां पशुसमानमानवाकीर्णानां बहुत्वात्सुमदेशः पाषाणेषु मणिरिव न सुलभः । लब्धेऽपि सुदेशे पापकर्मनीचकुलाकुलत्वात्कुले जन्म वृद्धोपसेवाविरहिते विनयवत्कृच्छ्रलभ्यं । लोकस्य कुले हि जातिः प्रायेण शीलविनयाचारसंपत्तिकरी भवति । सत्यामपि कुलसंपदि दीर्घायुरिन्द्रियबलरूपनीरोगत्वादीनि दुर्लभानि । सर्वेष्वपि तेषु लब्धेषु सद्धर्मप्रतिलंभो यदि न स्यात् व्यर्थं जन्म वदनमिव दृष्टिविकलं । तमेवमतिदुर्लभं सद्धर्मं कथं कथमप्यवाप्य विषयसुखे रंजनं भस्मार्थं चन्दनदहनमिव विफलं । निरक्तविषयसुखस्य तपोभावनाधर्मप्रभावनासुखमरणादिलक्षणः समाधिर्दुर्लभस्तस्मिन्सति बोधिलाभः फलवान् भवतीति चिंतनं बोधिदुर्लभत्वाऽनुप्रेक्षा । एवमस्य भावयतो बोधिं प्राप्य प्रमादो न कदाचिदपि भवति । इति बोधिदुर्लभाऽनुप्रेक्षावर्णनं ।

अथ धर्मस्वाख्याताऽनुप्रेक्षावर्णनं विधीयते । चतुर्दशगुणस्थानानां गत्यादिचतुर्दशमार्गणास्थानेषु स्वतत्त्वविचारलक्षणो धर्मः । निःश्रेयसप्राप्तिहेतुरहो भगवद्भिरर्हद्भिः स्वाख्यात इति चिंतनं धर्मस्वाख्यातत्वाऽनुप्रेक्षा । एवमस्य चिंतयतो धर्मानुरागः सदा प्रतिपन्नो भवति । इत्येवं चिंतनं संस्थानविचयमष्टमं धर्म्यम् ।

अथाऽऽज्ञाविचयस्वरूपमुच्यते । आज्ञाविचयमतीन्द्रियज्ञानविषय विज्ञातु चतुर्षु ज्ञानेषु बुद्धिशक्त्यभावात्परलोकबन्धमोक्षलोकालोकसदसद्विवेकवृद्धिप्रभावधर्माधर्मकालद्रव्यादिपदार्थेषु सर्वज्ञप्रामाण्यात्तत्प्रणीताऽऽगमकथितमवितथ नान्यथेति सम्यग्दर्शनस्वभावत्वान्निश्चयचिंतन नवम धर्म्यम् ।

अथ हेतुविचयस्वरूपमुच्यते । हेतुविचयमागमविप्रतिपत्तौ नयविशेषगुणप्रधानभावोपनयदुर्धर्षस्याद्वादप्रतिक्रियाऽवलम्बिनस्तर्कानुसारिरुचे पुरुषस्य स्वसमयगुणपरसमयदोषविशेषपरिच्छेदेन यत्र गुणप्रकर्षस्तत्राऽभिनिवेशः श्रेयानिति स्याद्वादतीर्थकरप्रवचने पूर्वापराविरोधहेतुपरिग्रहणसामर्थ्येन समवस्थानगुणानुचिंतन हेतुविचय दशम धर्म्यम् ।

सर्वमेतद् धर्म्य यान पीतपद्मशुक्ललेश्याबलाधानमविरतादिसराग गुणस्थानभूमिक द्रव्यभावात्मकसप्तप्रकृतिक्षयकारण । आ अप्रमत्तादन्तर्मुहूर्त्तकालपरिवर्त्तन परोक्षज्ञानत्वात् क्षायोपशमिकमात्र स्वर्गापवर्गगतिफलसवर्त्तनीय । शेषैकविंशतिद्वयभावलक्षणमोहनीयोपशमक्षयनिमित्तामिति ।

शुक्लध्यान द्विविध, शुक्ल, परमशुक्लमिति । शुक्ल द्विविध पृथक्त्ववितर्कवीचारमेकत्ववितर्कावीचारमिति । परमशुक्ल द्विविध, सूक्ष्मक्रियाऽप्रतिपातिसमुच्छिन्नक्रियानिवर्त्तिभेदात् । तल्लक्षण द्विविध, बाह्यमाध्यात्मिकमिति । गात्रनेत्रपरिस्पन्दविरहित जृम्भजृम्भोद्गारादिवर्जितमनभिव्यक्तप्राणापानप्रचारत्वमुच्छिन्नप्राणापानप्रचारत्वमपराजि-

तत्व बाह्य, तदनुमेय परेषामात्मन स्वसंवेद्यमा यात्मिक तदुच्यते।
पृथक्त्व नानात्व, वितर्को द्वादशाङ्गश्रुतज्ञान, वीचारोऽर्थव्यञ्जनयोगस-
क्रान्ति, व्यञ्जनमभिधान, तद्विषयोऽर्थ, मनोवाक्कायलक्षणो योग,
अन्येऽन्यत परिवर्त्तन सक्रान्ति। पृथक्त्वेन वितर्कस्यार्थव्यञ्जनयोगेषु
सक्रान्तिर्वीचारो यस्मिन्नस्तीति तत्पृथक्त्ववितर्कवीचार प्रथम शुक्ल।
तद्यथा—अनादिसभूतदीर्घससारस्थितिसागरे पार जिगमिषुर्मुमुक्षु
स्वभावविजृम्भितपुरुषाकारसामर्थ्याद्द्रव्यपरमाणु भावपरमाणु वैकमव
लब्ध्य सहनाऽशेषचिन्ताविक्षेपो महासवरसवृत कर्मप्रकृतीना स्थित्य-
नुभागो ह्रासयन्नुपशमयन् क्षपयंश्च परमबहुकर्मनिर्जरस्त्रिषु योगे
ष्वन्यतमस्मिन्वर्त्तमान एकस्य द्रव्यस्य गुण वा पर्याय वा बहुन-
यगहननिलीन श्रुतरविकिरणोद्योतबलेनान्तर्मुहूर्त्तकाल ध्यायति,
तत परमर्थान्तर सक्रामत्यथ वाऽस्यैवार्थस्य गुण वा पर्याय वा
सक्रामति पूर्वयोगाद्योगान्तर व्यञ्जनाद् व्यञ्जनान्तर सक्रामति इति।
अर्थार्थान्तरगुणगुणान्तरपर्यायपर्यायान्तरेषु योगत्रय सक्रमणेन तस्यैव
ध्यानस्य द्वाचत्वारिंशद्भङ्गा भवन्ति। तद्यथा—षण्णा जीवादिपदा-
र्थाना क्रमेण ज्ञानवर्णगतिस्थितिवर्त्तनाऽवगाहनादयो गुणास्तेषा
विकल्पा पर्याया। अर्थादन्योऽर्थोऽर्थान्तर गुणादन्यो गुणान्तर
पर्यायादन्य पर्यायान्तर। एवमर्थार्थान्तरगुणगुणान्तरपर्यायपर्याया-
न्तरेषु षट्सु योगत्रयसक्रमादष्टादश भङ्गा। अर्थाद्गुणगुणान्तरपर्या-
यपर्यायान्तरेषु चतुर्षु योगत्रयसक्रमणेन द्वादश भङ्गा भवन्ति।
एवमर्थान्तरस्यापि द्वादश भङ्गा भवन्ति। सर्वे सपिंडिता द्वाचत्वा
रिंशद्भङ्गा भवन्ति—एवविध

योगे स्थित्वा क्रमेण सूक्ष्मं मनोवचनोच्छ्वासनिश्वासं निरुध्य सूक्ष्मं काययोगं स्यात्तस्यैव सूक्ष्मक्रियाऽप्रतिपातिध्यानं भवति तत्तु सामान्येन तृतीयं परमशुक्लाऽपेक्षया प्रथमं। यदा पुनरन्तर्मुहूर्तशेषायुष्कस्तदधिकस्थितिकर्मत्रयः सयोगिजिनस्तदात्मोपयोगातिशयकर्मारातिशातनसमर्थं सामायिकखड्गसहायो विशिष्टक्रियो महाम् वरसंवृतो लघुकर्मपरिपाचनश्च भूत्वा शेषकर्मरेणुपरिशातनशक्तिस्वभावात्समयैश्चतुर्भिः दण्डकपाटलोकप्रतरपूरणाभिस्वात्मप्रदेशविसर्पणे जाते तावद्भिरेव समयैरुपसंहृतविसर्पेण आयुष्यसमीकृताऽघातित्रयस्थितिर्निर्वर्तितसमुद्घातक्रियः पूर्वशरीरपरिमाणो भूत्वाऽन्तर्मुहूर्तेन पूर्ववत्क्रमेण योगनिरोधं विधाय प्रथमपरमशुक्लध्यानं निष्ठापयन् ततः समये द्वितीयपरमशुक्लध्यानं प्रारब्धुमर्हति। तत्पुनरत्यन्तपरमशुक्लं समुच्छिन्नप्राणापानप्रचारसर्वकायवाङ्मनोयोगभेदोपरिस्पंदक्रियाव्यापारतया समुच्छिन्नक्रियानिवर्तीत्युच्यते। तत्र ध्याने सर्वास्रवनिरोधे सति सर्वशेषकर्मपरिशातनसामर्थ्योत्पत्तिमतोऽयोगिकेवलिनः संपूर्णशीलगुणं सर्वसंसारदुःखज्वालापरिष्वंगच्छेदजननं साक्षान्मोक्षकारणं भवति। स पुनरयोगकेवली भगवाँस्तदा ध्यानानलसंनिर्दग्धसर्वमलकलंकेन्धनो निरस्त प्रतिसारि। उपरिस्थितान्येव जानात्यनुसारि। उभयपार्श्वे स्थितानि पदानि नियमेनानियमेन वा जानात्युभयसारि। एवमेकस्य पदस्यार्थं परत उपश्रुत्यादावन्ते मध्ये वाऽशेषग्रंथार्थावधारणं पदानुसारित्वं। द्वादशयोजनाऽऽयामे नवयोजनविस्तारे चक्रधरस्कंधावारे गजवाजिखरोष्ट्रमनुष्यादीनामक्षरानक्षररूपाणां ना

नाविधकाविततशब्दाना युगपदुत्पन्नाना तपोविशेषबललाभाऽऽपादित-
सर्वजीवप्रदेशप्रकृष्टश्रोत्रेन्द्रियपरिणामात्सर्वेषामेककाले ग्रहण तत्प्रति-
भाषणसमर्थत्व च सभिन्नश्रोतृत्व । तप शक्तिविशेषाऽऽविर्भा
वितासाधारणरसनेन्द्रियश्रुतावरणवीर्यान्तरायक्षयोपशमागोपागनाम
लाभापेक्षस्यावधृतनवयोजनक्षेत्राद्बहिर्बहुयोजनविप्रकृष्टक्षेत्रादायातस्य
रसस्यास्वादनसामर्थ्य दूरास्वादनमेव शेषेष्वपीन्द्रियविशेषेष्ववधृतक्षेत्रा-
द्बहिर्बहुयोजनविप्रकृष्टदेशादायतेषु ग्रहणसामर्थ्य योज्य । रोहिण्यादि-
पञ्चशतमहाविद्यादेवताभिरङ्गुष्ठप्रसेनादिसप्तशतक्षुल्लकविद्यादेव
ताभिश्चागताभि प्रत्येकमात्मीयरूपसामर्थ्याविष्करणकथनकुशा-
लाभिर्वेगवताभिरचलितचारित्रस्य दशपूर्वदुस्तरसमुद्रोत्तारण दशपूर्वित्व
श्रुतकेवलिना चतुर्दशपूर्वित्व । अष्टौ महानिमित्तान्यन्तरिक्ष भौमा-
गस्वरव्यञ्जनलक्षणच्छिन्नस्वप्ननामानि । तत्र रविशशिग्रहनक्षत्रतारा-
गणोदयास्तमयादिभिरतीतानागतफलप्रविभागप्रदर्शनमन्तरिक्ष ।
भुवो घनसुषिरस्निग्धरूक्षादिविभावनेन पूर्वादिदिक्सूत्रविन्यासेन वा
वृद्धिहानिजयपराजयादिविज्ञान भूमेरन्तर्निहितसुवर्णरजतादिसन्सूचन
च भौम । तिर्यङ्मनुष्याणा सत्त्वस्वभाववातादिप्रकृतिरसरुधिरादिधा
तुशरीरवर्णगन्धनिम्नोन्नताङ्गप्रत्यङ्गदर्शनस्पर्शनादिभिस्त्रिकालभाविसुख
दु खादिविभावनमङ्ग । नरनारीखरपिङ्गलोलूकरपिवायसशिखाभृङ्गाद्या
दीनामक्षरानक्षरात्मकशुभाशुभशब्दश्रवणेनेष्टानिष्टफलाविर्भावक
स्वर । शिरोमुखग्रीवादिषु तिलकमशकलक्ष्मव्रणादिवीक्षणेन त्रिकाल
हिताहितवेदन व्यञ्जन । पाणिपादतलवक्ष स्थलादिषु श्रीवृक्षस्वस्तिकभृ
ङ्गारकलशाङ्कुशादिलक्षणवीक्षणात् त्रैकालिकस्थानमानैश्वर्यादिवि-

शेषण छक्षण। वस्त्रगत्वोपानदासनशयनादिषु देवमानुषराक्षसकृताविकिट्टपाषाणजात्यरूपकवल्लभ्यात्मस्वभावस्ततनतर पूर्वप्रयोगादाविद्धकुलालचक्रवदसंगत्वादपगतलेपालाबुवत्तथाबधच्छेदादेरण्डबीजवत्तथागतिपरिणामादग्निशिखावदूर्ध्वं गच्छतीत्यालोकान्ताद्गत्युपग्रहकारणधर्मास्तिकायाऽभावादलोक न गच्छति। एवमुक्तधर्म्यशुक्ले यो राद्धान्तसद्भावविषयसामान्ययोर्विषय प्रत्यभेद, अय तु विशेष। धर्मध्यान सकषायपरिणामस्यैकस्मिन्वस्तुनि चिरकाल न तिष्ठति रथ्याऽवस्थितप्रदीपवत्। शुक्लध्यान पुनर्वीतरागपरिणामस्यैकस्मिन् वस्तुनि धर्मध्यानावस्थानकालात्सख्येयगुणमचचलत्वादवतिष्ठते मणिप्रदीपवत्।

एवमुक्त द्वादशविध तप सर्वार्थसाधन, तत एव हि ऋद्धय सजायते। ताश्चर्द्धयो बुद्धिक्रियाविक्रियातपोबलौषधरसक्षेत्रभेदादष्टविधा। तत्र बुद्धिमहर्द्धिनाम बुद्धिरवगमो तद्विषया बुद्धिऋद्धिर ष्टादशविधा। केवलमवधिर्मन पर्ययज्ञानं बीजबुद्धि कोष्ठबुद्धि पादानुसारित्वं सभिन्नश्रोतृत्व दूराऽऽस्वादनस्पर्शनघ्राणदर्शनश्रवणसमर्थता दशपूर्वित्व चतुर्दशपूर्वित्व चाष्टागमहानिमित्तज्ञता प्रज्ञाश्रवणत्व प्रत्येकबुद्धिता वादित्व चेति। तत्र द्रव्यक्षेत्रकालभावकरणक्रमव्यवधानाऽभावे युगपदेकस्मिन्नेव समये त्रिकालवर्तिसर्वद्रव्यगुणपर्यायपदार्थावभासक केवलज्ञान। द्रव्यक्षेत्रकालभावै प्रत्येक विज्ञायमानदेशपरमसर्वभेदभिन्नमवधिज्ञानाऽऽवरणक्षयोपशमनिमित्त रूपिद्रव्यविषयमवधिज्ञान। द्रव्यादिभेदै प्रत्येकमवगम्यमानर्जुविपुलमतिविकल्प मन पर्ययज्ञानावरणक्षयोपशमकारण रूपिद्रव्यानतभागविषय मन पर्ययज्ञान। सुकृष्टवसुमतीकृते क्षेत्रे सारवति

कालादिसहायापेक्षं बीजमेकमुप्तं यथाऽनेककोटिबीजप्रदं भवति तथा नो इन्द्रियश्रुतावरणवीर्यान्तरायक्षयोपशमप्रकर्षे सति संख्येयशब्दस्यानन्तार्थप्रतिबद्धस्यानन्तलिङ्गैः सहैकपदस्य ग्रहणादनेकार्थप्रतिपत्तिर्बीजबुद्धिः । कोष्ठाऽगारिकस्थापितानामसङ्कीर्णानामविनष्टानां भूयसां धान्यबीजानां यथा कोष्ठावस्थानं तथा परोपदेशादवधारितानामर्थग्रन्थबीजानां भूयसामव्यतिकीर्णानां बुद्धचवस्थानं कोष्ठबुद्धिः । पादानुसारित्वं त्रेधा प्रतिसार्यनुसार्युभयसारिभेदात् । तत्र बीजपदादधःस्थितान्येव पदानि बीजपदस्थितिलिङ्गेन जानाति मार्गे शस्त्रकण्टकमूषिकादिकृतच्छेददर्शनात् कालत्रयविषयलाभालाभसुखदुःखादिमस्तकच्छिद्रं । वातपित्तश्लेष्मोदयरहितस्य पश्चिमरात्रिविभागे चन्द्रसूर्यधराद्रिसमुद्रमुखप्रवेशनसकलमहीमण्डलोपगूहनादिशुभस्वप्नदर्शनात् घृततैलाभ्यक्तात्मीयदेहखरकरभारूढापाग्दिग्गमनाद्यशुभस्वप्नदर्शनादागामिजीवितमरणसुखदुःखाऽऽविर्भावकः स्वप्नः । स च द्विविधः, छिन्नमालाविकल्पेन । गजेन्द्रसिंहपोतादिर्वै छिन्नः । पूर्वापरसम्बधानां भावानां दर्शनं माला । एतेषु महानिमित्तेषु कौशलमष्टाङ्गमहानिमित्तज्ञता ।

अतिसूक्ष्मार्थतत्त्वविचारगहने चतुर्दशपूर्विण एव विषयेऽनुपयुक्ते पृष्टेऽनधीतद्वादशाङ्गचतुर्दशपूर्वस्य प्रकृष्टश्रुतावरणवीर्यान्तरायक्षयोपशमाविर्भूताऽसाधारणप्रज्ञाशक्तिलाभान्निःसंशयनिरूपणं प्रज्ञाश्रवणत्वं । सा च प्रज्ञौत्पत्तिकी वैनयिकी कर्मजा पारिणामिकी चेति चतुर्विधा । तत्र जन्मान्तरविनयजनितसंस्कारसमुत्पन्नौत्पत्तिकी ।

विनयेन द्वादशाङ्गानि पठत समुत्पन्ना वैनयिकी। दुश्चरतपश्चरण-बलेन गुरूपदेशमन्तरेण समुत्पन्ना कर्मजा। स्वकीयस्वकीयजातिविशेषेण समुत्पन्ना पारिणामिकी चेति।

परोपदेशमन्तरेण स्वशक्तिविशेषादेव ज्ञानसंयमविधाने नैपुण्यं प्रत्येकबुद्धिता।

शक्रादिष्वपि प्रतिबन्धकेषु सत्स्वप्रतिहततया प्रतिभया निरुत्तराभिधानं पररन्ध्रान्वेषणं च वादित्वं। इति बुद्धिऋद्धिप्रकरणम्।

अथ क्रियर्द्धिः। क्रियाविषया ऋद्धिर्द्विविधा, चारणत्वमाकाशगामित्वं चेति। तत्र चारणाऽनेकविधा, जलजङ्घातन्तुपुष्पपत्रबीजश्रेण्यग्निशिखाद्यालम्बनगमना। जलमुपादाय वाप्यादिष्वप्कायिकजीवानविराधयन्तो भूमाविव पादोद्धारनिक्षेपकुशला जलचारणाः। भूमेरुपर्याऽऽकाशे चतुरङ्गुलप्रमाणे जङ्घोत्क्षेपनिक्षेपशीघ्रकरणपटवो बहुयोजनशताऽऽशुगमनप्रवणा जङ्घाचारणाः। एवमितरे बोद्धव्याः॥ पर्यङ्कावस्था वा निषण्णा वा कायोत्सर्गशरीरा वा पादोद्धारनिक्षेपणा वा साम्यामन्तरेण वाऽऽकाशगमनकुशला आकाशगामिनः। इति क्रियर्द्धिः।

विक्रियागोचरा ऋद्धिरनेकविधा। अणिमा, महिमा, लघिमा, गरिमा, प्राप्तिः, प्राकाम्यं, ईशित्वं, वशित्वं अप्रतिघातः, अन्तर्धानं, कामरूपित्वमादि। तत्राऽणुशरीरविकरणमणिमा। बिसच्छिद्रमपि प्रविश्याऽऽसीनः तत्र चक्रवर्तिपरिवारविभूतिं सृजेत्। मेरोरपि महत्तरशरीरविकरणं महिमा। वायोरपि लघुतरशरीरता लघिमा। वज्रादपि गुरुतरदेहता गरिमा। [illegible]ऽङ्गुल्यग्रेण मेरुशिखरदिवाकरा-

न्स्पर्शनसामर्थ्यं प्राप्तिः । अप्सु भूमाविव गमनं भूमौ जल इवो न्मज्जननिमज्जनकरणं प्राकाम्यं, अनेकजातिक्रियागुणद्रव्याधीनं स्वाङ्गाद्भिन्नमभिन्नं च निर्माणं प्राकाम्यं सैन्यादिरूपमिति केचित् । त्रैलोक्यस्य प्रभुत्वमीशित्वं । सर्वजीववशीकरणलब्धिर्वशित्वं । अद्रिमध्ये वियतीव गमनमप्रतिघातः । अदृश्यरूपताऽन्तर्धानं । युगपदनेकाऽऽकाररूपविकरणशक्तिः कामरूपित्वमिति, यथाऽभिलषितैकमूर्त्ताकारं स्वागम्य मुहुर्मुहुः करणं कामरूपित्वमिति वा । इति विक्रियर्द्धिप्रकरणम् ।

तपोऽतिशयर्द्धिः सप्तविधा । उग्रदीप्ततप्तमहाघोरतपोघोरपराक्रमा घोरब्रह्मचर्यं अघोरगुणब्रह्मचारिण इति । तत्रोग्रतपसो द्विविधाः, उग्रोग्रतपसः, अवस्थितोग्रतपसश्चेति । तत्रैकमुपवासं कृत्वा पारणं विधाय द्विदिनमुपोष्य तत्पारणानन्तरं पुनरप्युपवासत्रयं कुर्वन्त्येवमेकोत्तरवृद्ध्या यावज्जीवं त्रिगुप्तिगुप्ताः सन्तो ये केचिदुपवसन्ति त उग्रोग्रतपसः । दीक्षोपवासं कृत्वा पारणानन्तरमेकान्तरेण चरतां कदाऽपि निमित्तेन षष्ठोपवासे जाते तेन विहरतामष्टमोपवाससंभवे तेनाचरतामेवं दशद्वादशादिक्रमेणाधो न निवर्त्तमानानां यावज्जीवं येषां विहरणं तेऽवस्थितोग्रतपसः । महोपवासकरणेऽपि प्रवर्द्धमानकायवाङ्मनोबला दुर्गंधरहितवदनाः पद्मोत्पलादिसुरभिनिःश्वासाः प्रतिदिनप्रवर्द्धमानाऽप्रच्युतमहादीप्तिशरीरा दीप्ततपसः । तप्तायसकटाहपतितजलकणवदाशु शुष्काल्पाऽऽहारतया धारणेऽपि श्रमक्लेशविरहितास्त्रिभुवनमपि कनीयस्यागुल्योद्धृत्याऽन्यत्र स्थापयितुं समर्थाश्च कायबलिनः । इति बलर्द्धिः ।

अथौषधर्द्धिप्रकरणम् । औषधर्द्धिरष्टविधा । असाध्यानामप्याम याना सर्वेषा विनिवृत्तिहेतुरामर्शक्ष्वेलजल मलविट्सर्वौषधिप्राप्ताऽऽस्याविषदृष्टविषविकल्पात् । आमर्शः सस्पर्शो हस्तपादाद्यामर्श सकलौषधिं प्राप्तो येषा त आमर्शौषधिप्राप्ताः । क्ष्वेलो निष्ठीवन, उपलक्षणं चैतत्तेन श्लेष्मलालाविप्रुट्सिंहाणकादयश्चौषधिं प्राप्ता येषा ते क्ष्वेलौषधिप्राप्ताः । स्वेदालम्बनो रजोनिचयो जल्लः स औषधिं प्राप्तो येषा ते जल्लौषधिप्राप्ताः । कर्णदन्तनासिकादिसमुद्भवो मल औषधिं प्राप्तो येषा ते मलौषधिप्राप्ताः । विडुच्चार शुक्रमूत्र चौषधिं प्राप्तो येषा ते विडौषधिप्राप्ताः । अगप्रत्यगनखदन्तकेशादिरवयवस्तत्संस्पर्शी वाय्वादि सर्वौषधिं प्राप्तो येषा ते सर्वौषधिप्राप्ताः । उग्र विषसम्पृक्तोऽप्याहारो येषामास्यगतो निर्विषो भवति, यदीयवच श्रवणाद्वा महाविषपरीता अपि निर्विषा भवन्ति त आस्याविषाः । येषामालोकनमात्रादेवातितीव्रविषदूषिता अपि विगतविषा भवन्ति ते दृष्टविषाः । अथवा आशीविषमविष येषा ते आस्यविषाः, दृष्टिविषाणां विषमविष येषां ते दृष्टविषाः । इत्यौषधर्द्धिप्रकरणम् ॥

अत्र रसर्द्धिप्रकरण समुच्यते । रसर्द्धिप्राप्ता षड्विधा, आस्य विषा, दृष्टिविषा, क्षीरास्राविण, मध्वास्राविण, सर्पिरास्राविण, अमृतास्राविणश्चेति । प्रकृष्टतपोबला यतयो य ब्रुवते म्रियस्वेति स तत्क्षणादेव महाविषपरीतो म्रियते त आस्यविषाः । आशीर्विषा इति केचित्तत्राप्ययमेवार्थस्तदाऽऽशासनादेव म्रियमाणत्वात् । उत्कृष्टतपसो यतय क्रुद्धा यमीक्षते स तदैवोग्रविषपरीतो म्रियते ते दृष्टिविषाः । विरसमप्यशन येषा पाणिपुटे निक्षिप्त क्षीररसवीर्य-

परिणामिता भजते, येषां वा वचनानि क्षीरवत्क्षीणानां तर्पकाणि भवन्ति ते क्षीराऽऽस्राविणः । येषां पाणिपुटे पतित आहारो नीरसो ऽपि मधुररसवीर्यपरिणामितां भजते येषां वा वचांसि श्रोतॄणां दुःखार्दितानामपि मधुरगुणं पुष्णाति ते मध्वाऽऽस्राविणः । येषां पाणिपात्रगतमन्नमक्षरधीराग्निभावपरिणामविरहिताम्यवहरणात्सततपसः । अणिमादिजलचारणाद्यष्टगुणालङ्कृता विस्फुरितकायप्रभा विविधाक्षीणर्द्धियुक्ताः सर्वौषधर्द्धिप्राप्ताः अमृतीकृतपाणिपात्रनिपतितसर्वाहाराः सर्वामरेन्द्रेभ्योऽनन्तबला आशीविषदृष्टिविषर्द्धिसमन्विताः सततपसश्च । सकलविद्याधारिणो मतिश्रुताऽवधिमनःपर्ययज्ञानाऽवगतत्रिभुवनगतव्यापारा महातपसः । वातपित्तश्लेष्मसन्निपातसमुद्भूतज्वरकासाक्षिशूलकुष्ठप्रमेहादिविविधरोगसंतापितदेहा अप्यप्रच्युताऽनशनादितपसोऽनशने षण्मासोपवासाः, अवमोदर्ये एककवलाहाराः, वृत्तिपरिसंख्याने चत्वरगोचरावग्रहाः । रसपरित्यागे उष्णजलधौतोदनभोजिनः विविक्तशयनाऽऽसने भीमश्मशानगिरिगुहागह्वरशून्यग्रामादिषु प्रदुष्टयक्षराक्षसपिशाचप्रनृत्यद्वेतालरूपविकारेषु परुषशिवारुतानुपरतसिंहव्याघ्रादिव्यालमृगभीषणस्वनघोरचौरादिप्रचलितेष्वभिरतावासाः, कायक्लेशेऽतितीव्रशीतातपवर्षानिपातप्रदेशेष्वभ्रावकाशातापनवृक्षमूलयोगग्राहिणः । एवमाभ्यन्तरतपोविशेषेष्वप्युत्कृष्टतपोऽनुष्ठायिनो घोरतपसः । ॥ एवं गृहीततपोयोगवर्द्धनपराः । त्रिभुवनोपसंहरणमहीवलयग्रसनसकलसागरसलिलसंशोषणजलाग्निशिलाशैलादिवर्षणशक्तयो घोरपराक्रमाः । चिरोषितास्खलितब्रह्मचर्यावासाः प्रकृष्टचारित्रमोहक्षयोपशमात्प्रणष्टदुःस्वप्ना घोरब्रह्मचारिणः, अथवा

अघोरगुणब्रह्मचारिण इति पाठे अघोर शात ब्रह्मचारित्र येषा ते अघोरगुणब्रह्मचारिण । शातिपुष्टिहेतुत्वाद्येषा तपोमाहात्म्येन डमरेऽतिमारिदुर्भिक्षवैरकलहवधबंधनरोगादिप्रशमनशक्ति समुत्पद्यते तेऽघोरगुणब्रह्मचारिण । इति तपोऋद्धि ।

अथ बलर्द्धि । बलाऽऽलम्बनादृद्धिस्त्रिविधा, मनोवाक्कायविषयभेदात् । तत्र श्रुतावरणवीर्यांतरायक्षयोपशमप्रकर्षे सति खेदमतरेणात र्मुहूर्ते सकलश्रुतार्थचिंतनेऽवदाता मनोबलिन । मनोजिह्वाश्रुतावरणवीर्यांतरायक्षयोपशमातिशये सत्यतर्मुहूर्ते सकलश्रुतोच्चारणसमर्था सततमुच्चैरुच्चारणे सत्यपि श्रमविरहिता अहीनकठाश्च वाग्बलिन । वीर्यान्तरायक्षयोपशमप्रकर्षाद्याविर्भूताऽसाधारणकायबलत्वान्मासिकचातुर्मासिकसावत्सरिकादिप्रतिमायोगस्क्षमपि सर्पिरसवर्यविपारमवाप्नोति, सर्पिरिव वा येषा भाषितानि प्राणिना सतर्पकाणि भवति ते सर्पिरास्राविण । येषा करपुटप्राप्त भोजन यत्किंचिदमृतमास्कदति, येषा वा व्याहृतानि प्राणिनाममृतवदनुग्राहकाणि भवति । इति रसर्द्धिप्रकरणम्

अथ क्षेत्रर्द्धि । क्षेत्रर्द्धिप्राप्ता द्वेधा, अक्षीणमहानसा, अक्षीणमहालयाश्चेति । लाभातरायक्षयोपशमप्रकर्षप्राप्तेभ्यो यतिभ्यो भिक्षा दीयते ततो भोजनाच्चक्रधरस्कधावारोऽपि यदि भुजीत तद्दिवसे नान्न क्षीयते तेऽक्षीणमहानसा । अक्षीणमहालयलब्धिप्राप्ता यतयो यत्र हस्तचतुष्टयमात्रावासे वसति तत्र देवमानुषतिर्यग्योनय सर्वेऽपि निवसेयु परस्परमबाधमाना सुखमासते तेऽक्षीणमहालया इति ।

एवमुक्त तप सामर्थ्यं, तपस्विभिरध्युषितानि क्षेत्राणि तीर्थत्व मुपगतानि । परस्परविरोधिनोऽपि प्राणिनो जातिविरोध कारणविरोध विमुच्य शातातरगा भवति तप सामर्थ्यात् । किं बहुना तप किं न साधयत्यपि तु सर्वमेव साधयति । तदेवोक्तम्—

यद्दूर यद्दुराराध्यं यच्च दूरे व्यवस्थितम् ।
तत्सर्वं तपसा साध्य तपो हि दुरतिक्रमम् ॥

तपो यस्य न विद्यते स चवापुरुषो यथा मुचति त सर्वे गुणा, नासौ मुचति ससार, उपधित्याग पुरुषहितो यतोयत परिग्रहा दपेतस्ततस्तत सयतो भवति । ततोऽस्य खेदो व्यपगतो भवति । परिग्रहपरित्याग एवैहिकामुत्रिकपरमसुखकारण निरवद्यमन प्रणिधान । पुण्यनिधान । परिग्रहो बलवती सर्वदोषप्रसवयोनि । नत्वस्या उपधिभिरतृप्तिरस्ति सलिलैरिव सलिलनिधेर्वडवाया । उक्त हि—

अनेकाऽऽधेयदुष्पूर आशागर्त्तश्चिरादहो ।
चित्र यत्क्षणमात्रेण त्यागेनैकेन पूर्यते ॥

अपि च—

क पूरयति दुष्पूरमाशागर्त्त दिने दिने ।
यत्रास्तमस्तमाधेयमाधारत्वाय कल्पते ॥

परिग्रहसग एव दुःखमयाग्नि जनयतीति । उपात्तेष्वपि शरीरादिषु संस्कारापोहाय 'ममेद' भावाऽभाव आर्किचन्य । शरीरादिष निर्ममत्वात्परमनिर्वृतिमवाप्नोति यथा यथा पोषयति तथा तथा आपत्य तज्जनयति, तपस्यप्यनादरो भवति । शरी

रादिषु कृताऽभिष्वंगस्य संसारे सर्वकालमभिष्वंग एव। मयाऽनुभूता-गना सुरूपेति सविलासेति कलागुणविशारदेति स्मरणं, तत्कथा-श्रवणं रतिपरिमलाधिवासितस्त्रीसंसक्तशयनाऽऽसनमित्येवमादि पूर्व-रतानुचिंतनवर्जनं परिपूर्णब्रह्मचर्यमित्याख्यायते। ब्रह्मचर्यमनुपाल-यंतं हिंसादयो दोषा न संस्पृशंति। नित्याऽभिरतगुरुकुलवासमधि-वसंति गुणसंपदः। वरांगनाविलासविभ्रमविधेयीकृतः पापैरपि विधे-यीक्रियते। अजितेंद्रियता हि लोके प्राणिनामपमानविधानी।

इत्येवमुत्तमक्षमाया उत्तममार्दवस्योत्तमार्जवस्योत्तमशौचस्योत्तम-सत्यस्योत्तमसंयमस्योत्तमतपस उत्तमत्यागस्योत्तमाकिंचन्यस्योत्तम-ब्रह्मचर्यस्य तत्प्रतिपक्षणा च गुणदोषविचारपूर्विकायां क्रोधादिनि-वृत्तौ सत्यां तन्निबंधनकर्मास्रवाऽऽभावान्महान् संवरो भवति।

तत्त्वार्थराद्धान्तमहापुराणे-
ष्वाचारशास्त्रेषु च विस्तरोक्तम्।
आख्यात्समासादनुयोगवेदी
चारित्रसारं रणरंगसिंहः

इति सकलाऽऽगमसंयमसंपन्नश्रीमज्जिनसेनभट्टारकश्रीपादपद्मप्रसादा-ऽऽसादितचतुरनुयोगपारावारपारगधर्मविजयश्रीमच्चामुण्डरायमहाराज विरचिते भावनासारसंग्रहे चारित्रसारेऽनगारधर्मः समाप्तः॥

समाप्तोऽयं ग्रन्थः।